# मणिद्वीपः






प्रकाशकः—

जे० अनन्त ब्रदर्स

❀ श्रीः ❀

# मणिद्वीपः ।








द्वितीयं मुद्रणम् ]　　　　[ १०००

मूल्यम् १) रु०

# उपोद्घातः ।

भगवान् श्रीवेदव्यासमहर्षिरिमं मणिद्वीपं देवीभागवते द्वादश-स्कन्धे दशमैकादशद्वादशभिरध्यायैस्त्रिभिरवर्णयत् । तमेवायं श्रीमातृप्रसाद-समासादितकवितासंपज्जम्मलमडकोपनामा सूर्यनाराय-णाभिधो नैसर्गिककविः प्रथमाध्याये अष्टादशप्राकारवर्णनेन चिन्ता-मणिगृहवर्णनेन महापद्माटवीवर्णनेन च संक्षेपेण न्यरूपयत् । द्वितीयाध्याये तु श्रीपार्वतीपरमेश्वरसंवादरूपेण स्त्रीपुरुषलक्षणानि दम्पतीधर्मान् मन्त्रशास्त्रोत्पत्तिं अपक्वहारविधानं कर्मविपाकरहस्यानि च प्रत्यपादयत् । तृतीयाध्याये कविस्स्वानुभवं शक्तिस्वरूपं ब्रह्मतत्त्वं कुण्डल्या आरोहणक्रमं षड्रिपुवर्णनं योगशास्त्रसम्प्रदायक्रमं सत्य-ज्ञानानन्दात्मक-ब्रह्मतत्त्वप्रभृत्यनेकशास्त्रांशान् युक्तायुक्ततया स्वानु-भवेन समानता संपादयितुं युक्तिं सम्यक् सरलरीत्या ऽवेदयत् । कवि-कुलावतंसेन विरचितं पञ्चदशीस्तोत्रं कामदहनस्तोत्रमस्मिन्पुस्तके संनिवेशितमस्ति । यतोऽयं मणिद्वीपो योगमन्त्रशास्त्राद्यनेक-शास्त्रीय-विषयसमवायात्मकः । अतो मुख्यत्वेन पाठशालासु पाठ्यपुस्तकेषु निवेसयतुमयमर्ह्यह इत्युपोद्घातरचयितुरा-कूतमति शुभम् ।

श्रृंगेरीमठ,
बनारस ।

प्रा० सीताराम शास्त्री ।

# मणिद्वीपस्य विषयाणां सूची

## तत्र प्रथमाध्याये–



## द्वितीयाध्याये–

तृतीयाध्याये–

# कृतिसमर्पणम्

इदं दाममणिद्वीपं मणिभि श्शास्त्रसिन्धुजैः ।
ग्रथितं ब्रह्मसूत्रे च विदांकुर्वन्तु पण्डिताः ॥१॥
अमूल्यं नूतनं दिव्यं दर्शनीयं प्रयत्नतः ।
श्रीदेव्याश्चार्पितं भक्त्या विदांकुर्वन्तु पण्डिताः ॥२॥



* श्रीः *

# मणिद्वीपः ।



प्रास्ताविकश्लोकाः—

सुधाकूपारान्तस्त्रिदशतरुहेमाद्रिविलस-
न्मणिद्वीपे चिन्तामणिविरचितानन्दभवने।
विराजच्चिद्रूपं सकलजगदाधारममलं
शरीराभ्यामेकं परमशिवयो नौमि सततम् ॥

शिवाभ्यां पत्राभ्यां हृदि कवनचूताङ्कुरमिदं
तदीयव्यासङ्गात्सकृतिकठिनं विघ्नतिमिरम् ।
हठादूर्ध्वं भित्वा गतमिह गुरुद्बोधजलमु-
ग्घनासारैर्भूयादपि सुमफलालङ्कृततरुः ॥ २ ॥

यथैव चाकाशमुपागता घना
वृथैव जल्पन्ति हि वायुताडिताः ।
तथैव वाचालतया वदाम्यहं
कथाऽमृतं व्यासमहर्षिकल्पितम् ॥ ३ ॥

अचेतनश्चापि शिवस्य ताण्डवे
ननाद सूत्राणि कराहतः पुरा ।
अरण्यवासी च निरक्षरोऽपि वा
स कालिदासोऽभवदुत्तमः कविः ॥४॥

निरन्तरं शान्तमनन्यधीश्चिरं
तयोस्सपर्यां कृतवानतन्द्रितः ।
कृपा च जाता मयि पामरेऽधुना
न किं भवेयं कविरप्यनाविलः ॥ ५ ॥

तयोः प्रभावात्प्रथिता भवन्ति वै
निरामया स्थावरजङ्गमाश्च ते ।
इतोऽधिका भक्तिरनन्यचिन्तना
भवेत्तयोर्जन्मशतेषु वा मम ॥६॥

गोदावरीजलपवित्रितभूनिवासं
शान्तालयं ग्रहगणैकनिबद्धलक्ष्यम् ।
श्रीवेङ्कयार्यमपि तातमखण्डदीक्षं
कामेश्वरीं च जननीं प्रणतोऽस्मि नित्यम् ॥७॥

ताद्दक्प्रशस्तजननीजनकप्रसूत-
स्ससंसेव्य साधुजनसंघमसानि धन्यः ।
स्वात्यां सुजातघनशुक्तिगतोदबिन्दुः
किं मौक्तिकं न हि भवेदपि कुण्ठिताङ्गम् ॥८॥

आदौ सर्वरसान्वितं यदकरोत्काव्यं पुराणो मुनि-
र्यन्नूनं पठनात्पुनाति पतितान्प्रायो ददातीप्सितम् ।
यद्वासिष्ठकथामृतं स्फुटमगाद्ब्रह्मेति सर्वं जगत्
ते वाल्मीकिकृते च तौ मुनिवरौ श्रीरामचन्द्रं स्तुवे ॥९॥

भो भोः पण्डितपुंगवास्सविनया विज्ञापना श्रूयतां
ध्याने धावति मे मनः प्रतिदिशं त्यक्त्वा भवान्याः पदं
तस्मादस्य जयाय कल्पितमिदं तन्निग्रहप्रग्रहं
वैदुष्यं मम नास्ति पद्यरचने मत्साहसं क्षम्यताम्॥१०॥

भो भोः पण्डितपुंगवास्सविनया विज्ञापना श्रूयतां
ग्रन्थस्यास्य हि पाठकाच्छहृदये तैस्तैर्विनारञ्जकैः ।
कृत्स्नं दीपमिदं सकानन-नदी-प्राकार-शैलोदधि-
स्फूर्जच्चित्रकमालिखाम्यनिमिषादेका प्रतिज्ञा मम ॥११॥

भो भोः पण्डितपुंगवास्सविनया विज्ञापना श्रूयतां
जन्मानेकसहस्रसंसृतिरसावेशैकलुब्धेन्द्रियैः ।
पाषाणैरभिभूतचण्डकिरणं चैतन्यचिन्तामणि
द्वीपस्य स्मरणाल्लभेत सुकृतीत्यन्या प्रतिज्ञा मम॥१२॥

भो भोः पण्डितपुंगवाः पुनरियं विज्ञापना श्रूयतां
ज्योतिश्शास्त्रविदस्मि योगनिपुणो वेदान्तविद्योन्नितः ।
यन्त्रज्ञोऽस्मि च चित्रकर्मनिरतः शार्दूलविक्रीडितः
चित्रैस्तैर्बहुभिः कृता च महती क्रीडा समालोक्यताम्॥१३॥

नानाशास्त्रमहामहीरुहलतावृन्दाभिरामं मणि-
द्वीपं निर्मलवाक्सुधारसलसत्सिन्धूर्मिमालावृतम् ।
अष्टैश्वर्यसुवर्णरत्नखनिजोद्गीर्णाद्रिकूटोज्ज्वलं
ब्रह्मानन्दरसप्रशान्तविषयानन्दं सदा भासते ॥१४॥

## मणिद्वीपे प्रथमोध्यायः ।

श्रीमाता प्रेमरूपा सकलमुनिगणैस्स्रग्धरैस्सिद्धसाध्यै-
स्स्रष्ट्राद्यैर्लोकपालैरहमहमिकया साङ्गनैर्गानदक्षैः ।
सानन्दं सेव्यमाना कनकमणिमयैर्भूषणैर्द्योतिताङ्गी
हेमाभा मञ्जुवेषा विकसितवदना चन्द्रमौलिं बभाषे ॥१॥

कान्तारोद्यानभागैर्विविधफलभरैः पुष्पवद्भिर्विशालैः-
कासारैर्निम्नगाभिर्नवनिधिसहितैः पर्वतैरुन्नताग्रैः ।
प्रासादैश्चित्रचित्रै र्द्विजवरनिबहैर्वाहनैर्जन्तुयूथै-
र्लीलार्थं वासयोग्यां विरचय वसतिं सर्वसम्पत्समृद्धाम् ॥२॥

भूतेशः शूलपाणि र्विधिहरिदिविजैश्शिल्पिभिश्चित्रकारै-
र्द्वीपेऽस्मिन्दुग्धसिन्धौ मणिगणबहुले गोपुरारामसालैः ।
वैकुण्ठात्सत्यलोकात्सुललितनगरं स्वस्य लोकात्समस्ता-
त्क्रीडार्थं लोकमातुस्सरभसमुचितं निर्ममे दीप्यमानम् ॥३॥

———

## ❀ अथ कथारम्भः ❀

आस्ते तत्परितस्सुधाब्धिरमरैरासेव्यमानोऽन्वहं
निष्कूजद्वयमानपत्रिनिवहव्याकीर्णदिङ्मण्डलः ।
यातायातसुवर्णपोतजवनालोलोर्मिमालाकुल-
स्तीरेऽस्मिन्सुविशालरत्नपुलिने मोदं तनोत्याशुगः ॥४॥

दुर्ग्राह्यो वरणोऽस्ति मानस इवाऽयोधातुना निर्मितो
रक्षार्थं निवसन्ति युद्धनिपुणा द्वारेषु नक्तं दिवम् ।
लोकानामवने च शिक्षणविधौ दक्षाश्च भूमीश्वराः
शान्तानेव सकौतुकान्द्विजवरान्ते प्रेषयन्त्यन्तरम् ॥५॥

अन्यः कांस्यमयोऽस्ति भूरुहलता वृन्दैरवन्ध्यैस्सदा
गुञ्जन्मत्तमधुव्रतैर्मृगवरैर्नीडोद्भवैस्सेवितः ।
रत्नस्वर्णविनिर्मिताष्टशिखरप्रासादबद्धध्वज-
व्याप्तःकामिजनाश्रयोऽस्ति विनदत्स्रोतस्विनी शीतलः॥६॥

उद्यद्भानुसहस्रकान्तिसदृशस्ताम्राकुलश्शोभते
भार्याभ्यां तमलङ्करोति शतधा भृत्यैर्वसन्तस्समम् ।
वाटीकल्पलताकुला परभृतैः पारावतैराश्रिता
गायन्त्यत्र सुराङ्गनाश्श्रुतिसुखं तूर्यस्वनैस्सन्ध्ययोः ॥७॥

साले सीसविनिर्मितेऽस्त्यपि शुचिस्सन्तानवाटीविशु-
र्धारायन्त्रकठोरनालसलिलैस्सन्तर्पयन्भूरुहान् ।
तेषां केचिदनूनकोरकसुमैः केचित्फलैर्गुम्फिताः
क्रीडन्त्याशु मृगाङ्गनास्सशिशुका छायाश्रिता वीरुधास्॥८॥

क्ष्माभृन्मध्यघनाटवीसूपगताः प्रावृड्घना रीतिके
साले विद्युदपास्तगाढतिमिरा गर्जन्ति विद्युत्समम् ।
आसारेण वनं निरन्तरदलं सिंचन्ति तच्चान्दनं
नद्यस्ताः प्रवहन्त्यखण्डितरया नार्यो यथा खण्डिताः ॥९॥

नम्रा पुष्पभरेण भूजविततिर्वान्ति प्रसन्नानिलाः
क्रीडायोग्यसरित्तटानि सिकताकीर्णानि दृश्यन्ति वै ।
नित्यं यच्छति पुष्पदामपिटकान्मन्दारवाटीभवा
हेमाद्युत्तमपञ्चलोहघटितप्राकारमध्ये शरत् ॥ १० ॥

सौधे रौप्यमये तथेन्दुनिकरज्योत्स्नासमुद्भासिते
शालाश्वेतमनोज्ञपुष्पनिबहाऽऽमोदेन संवासिताः ।
नीरन्ध्रोन्नतपारिजातगहने हेमन्तसौधान्तरे
तंत्रीवादनलालसाश्च ललितां गायन्ति दिव्याङ्गनाः ॥११॥

नित्याभ्यासवशीकृतैस्स्थिरतरैर्जालन्धराद्यैस्त्रिभिः
खेचर्यादिभिरुद्धतेन्द्रियमनः प्रेतासनाधिष्ठिताम् ।
कूटस्थां कुलयोगिनोमविरतं ध्यायन्ति वद्धस्पृहा—
स्सिद्धाः पुष्करचुम्बिहेमशिशिरप्राकारकुञ्जस्थिताः ॥१२॥

प्रासादाश्शुभपुष्परागरचिताः प्राकारमध्यस्थिताः
तेष्विन्द्राग्नियमास्तथैव निर्ऋतिस्वस्वांगनास्त्रायुधाः ।
सन्त्यन्ये वरुणानिलौ च धनदो रुद्रस्स्वकोणं गतः
प्रागाद्यष्टदिगीश्वराश्च दनुजत्रासं विना रक्षिताः ॥१३॥

सङ्ख्यातीतगजोष्ट्रसिंहतुरगं सन्तर्पितं जग्धिभि-
स्संग्रामोचितयानशस्त्रनिवहं श्वेतातपत्रध्वजम् ।
सेनानायकमन्त्रिपुङ्गवगणं सैन्यं तु युद्धोत्सुकं
प्रासादे घनपद्मरागरचिते सज्जं भवत्यन्वहम् ॥१४॥

रथ्याचित्रितपङ्क्तैस्तत इतस्सन्धीकृताऽनोकहैः
पञ्चास्येभमरालसुन्दरशिलालङ्कारशृङ्गाटकैः ।
प्रालेयाम्बुजलाशयैर्जलचरैर्गोमेधिकैः कुट्टिमैः
सम्फुल्लोरुकदम्बचम्पकसुमैः क्रीडावनं राजते ॥१५॥

धिक्कुर्वन्ति लताप्रसूनपिहितास्ते मण्डपा वेदिका-
श्चण्डांशोरपि दीधितिं च्छत्रमुखैर्हीराश्मभिर्निर्मिताः।
गीर्वाणप्रमदाः कलासु कुशलास्तत्तद्गृहारामगा
देव्याराधनयुक्तवस्तु निकरान्सम्पादयन्त्यादरात्॥१६।

वैदूर्योपलमन्दुरासु निहितान्हेमाङ्गभूषाञ्चितान्
सौम्यावर्तमनोहरांश्च तुरगान्शुक्लद्विपेन्द्रान्कुथैः।
आशुण्डांतविलिप्त धातुपटलैर्ग्रैवेयकैर्दामभि-
स्सज्जीकृत्य विमानयानशकटान्तिष्ठन्ति ते सादिनः॥१७॥

यत्रारामगृहान्तरप्रभृतयो नीलोपलैश्चित्रिता-
स्तन्नीलोत्पलसन्निभं परिजनाक्रान्तं नमाम्युन्नतम्।
मेधाद्या निवसन्ति षोडशमहारूपाश्शिवायाः कलाः
प्राणिभ्यो वितरन्ति शक्तिमुचितां ताभ्यश्च शश्वन्नमः॥१८॥

हर्म्यद्वारगवाक्षमण्डपमुखव्यालंबिमुक्तावली-
मध्यानद्धसुवर्णरत्नशकलज्योतिच्छटाभासुरे।
आस्तीर्णारुणकम्बलासनयुते साम्राज्ययुक्ताः प्रिया-
मन्त्रिण्योष्टवसन्ति मौक्तिकमये राज्याङ्गचिन्तापराः॥१९॥

दुर्गे मारकते भवन्तिविपुलाऽऽरामाश्रिताष्षड्गृहा
गायत्र्या विधिरस्ति पूर्वसदने रत्या स्मरः पश्चिमे ।
आग्नेयादिचतुर्दलेषु धनदो लक्ष्म्याऽथ शौरिः पुन-
स्सावित्र्याचकपालभृद्गिरिजया तुष्ट्या गजास्यः क्रमात्॥२०॥

सस्याढ्या पृथिवी विभाति सरितां तोयं च निष्कल्मषं
चण्डांशौ नहि चण्डता च पवनो नीत्वा तु पुष्पासवम् ।
मन्दं वाति समस्तखेटभुवनग्राहत्तमं निर्मलं
व्योमाप्यत्र वसेस्ति भूतनिवहस्तस्मिन्प्रवाले शुभे ॥२१॥

मुक्ताविद्रुमचन्द्रकान्तमणिभिः कुड्येषु शृङ्गेषु या
वल्लर्यस्सुमकोरकाणिविहगाः कण्ठीरवाश्चित्रिताः ।
तेषां द्योतिभिरिन्द्रचापसदृशैव्योमं नभश्शोभते
तं विद्यानिलयं भजे सुकृतिनां स्थानं जगन्मण्डनम्॥२२॥

❀ महापद्माटवीवर्णनम् ❀

शैलाग्रच्युतसानुपातशिथिलग्रावैरखण्डोदकै-
र्गम्भीरोस्ति जलाशयोतिमधुरैरापूर्यमाणोऽनिशम् ।
नीरं याति सफेनकं कलकलं पूर्णाधिकं निर्गमाद्-
दिष्ट्या भाति तदम्बुसम्भवमहापद्माटवीविश्रुता ॥२३॥

सन्त्यस्मिन्नभसंगमाः कटुरवं त्यक्त्वाऽब्जपत्रेष्वहो
ह्रीं ह्रीं ह्रीमिति घोषयन्ति मधुपाः पङ्केरुहास्वादिनः।
मुक्ताभ्रूणमहर्निशं सपृथुका जग्ध्वा मरालास्तटे
स्नात्वा चञ्चुपुटेन पत्रनिवहं संशोधयन्त्यातपे ॥२४॥

तत्राखातजले सुरासुरगणास्त्रीपुंश्चली निर्गमै-
रासौधाग्रविकीर्णवारिविसरैर्व्यालोलपुष्पच्छदैः।
मुक्तारत्नकुशेशयव्रततिभिः प्रासादमत्यद्भुतं
चक्रुश्चित्रसमाकुलं मृगमदामोदैश्च विभ्राजितम् ॥२५॥

चत्वारश्शुभमण्डपा विरचिताश्चिन्तामणिप्रस्तरै-
स्तत्तत्पीठगता कृपारसमयी लोकानवत्यन्वहम्।
मार्गास्सन्ति चतुर्दलेषु सलिलं ततुं चतुस्संक्रमा
द्वाभ्यामेव विशन्ति तत्र विबुधा द्वाभ्यां बहिर्यान्ति च ।२६।

शाणोल्लीढपृथूपलाच्छमणिभिर्ये मण्डपाश्चित्रिता-
स्तत्तत्कान्तिकलापमुद्रितमभूत्पाथोमुखं निर्मलम्।
कौशेयाम्बरकेतुपङ्क्तिपटलैस्सर्वेऽपि ते मण्डिता-
स्तच्चिन्तामणिमन्दिरस्य सकलं संकल्पसिद्धं खलु॥२७॥

॥ इतिमणिद्वीपे प्रथमोऽध्यायः॥

# मणिद्वीपे द्वितीयोऽध्यायः

देव्यै तद्वनमन्दिरैः परिजनैर्वृन्दारकैस्सङ्कुलं
निर्दिश्याह शिवोऽन्तरीपमखिलं निर्मापितं यत्नतः ।
ज्ञात्वा छन्दमुदीरितस्य सुभगा द्राग्व्योमयानं गता
तेनैषा कृतकौतुका तदखिलंद्रष्टुं प्रतस्थे स्वयम् ॥१॥

द्वैतं देवि मनोहरं विरचितं चैत्यादिकं दक्षिणं
वामं वाममिहास्त्यकल्पकमिदं शैलादिकं काननम् ।
प्रत्याख्यानमिहोच्यतां यदि भवेन्निर्मापणे संग्रहे
नाहं द्वेष्मि तथापि मास्त्वविनयोमास्त्वन्तरङ्चावयोः ॥२॥

## ❀ उद्यानवर्णनम् ❀

एलाम्भोरुहनारिकेलकदलीखर्जूरपूगादयो
द्राक्षादाडिमनिम्बचूतपनसास्ताम्बूलवल्ल्यादयः ।
जातीचम्पकपारिजातबकुलाऽशोकाः कदम्बादय-
स्सस्याढ्याः कुसुमान्विताश्च ललिते वंध्या न सन्त्युद्भिदः ॥

चूतं पश्य शिखीमुखैश्शुककुलैः पुंस्कोकिलैर्नादितं
तन्मूले नवमल्लिकां च विकसत्पुष्पद्रवस्यन्दिनीम् ।
शाखाभिः परिवेष्टितापि निविडं द्राग्वायुना भ्रश्यते
गाढालिंगनविह्वलांगलतिका रुष्टा नवोढा यथा ॥४॥

मित्रप्रेमलसत्कराग्रविदलत्पत्रत्रुटत्कञ्चुका
मीनास्फालितपङ्कजोरुमुकुलप्रस्पन्दिवक्षोरुहा ।
क्रोशत्पत्त्रिकुलोरुपत्रविसरव्याधूतभृंगालका-
रम्योद्याननदीप्रियेव विरहे मोदं तनोत्युत्सुका ॥५॥

❀ अरण्यवर्णनम् ❀

झञ्झामारुतवेगकम्पितजरच्छाखाग्रनिष्पेषणै-
र्गायद्वंशघनान्धकारसुषिरप्रान्तस्थझिल्लीशतैः ।
नीराधारगलज्जलैश्च सततं शाखामृगैः कानने
नृत्यद्भिः क्रियते मयूरमिथुनैः कोलाहलश्श्रूयताम् ॥६॥

मा भैषी गिरिगह्वरान्तरगता गर्जन्ति कण्ठीरवाः
प्रावृण्मेघगभीरभीषणरवं मत्ता भृशं जृम्भया ।
शार्दूलाः प्रतिबिम्बनैस्सह जले युद्ध्यन्ति साक्रोशनं
का भीतिर्निजवाहनाद्गिरिसुते! दैत्यास्त्वया खण्डिताः ॥७॥

सन्दग्धा विपिने द्रुमा इतिशुचं प्रज्ञानिधे मा कृथाः
पूर्वं राज्यमदेन दर्पितनृपास्संक्षोभ्य लोकान्पृथा ।
प्राप्ता स्थावरतां दवो निधनकृद्भूमीरुहाणामयं
विद्धीदं कृपया मया विरचितं दातुं सुजन्मान्तरम् ॥८॥

भल्लूकाः कथमप्युपेत्य शनकैर्वृक्षाग्रमालम्बितं
मध्वाधारमपास्य तद्गतरसं निश्शंकमापीय हा !
घोणान्तर्गतमक्षिकाभिरनिशं वाश्यन्त्यमी दंशिता
ह्याशापाशवशं गताल्पमनसामेवं विपत्कल्प्यते ॥ ९ ॥

ये व्यालास्तरुकोटरान्तरगतानत्तुं कुलायोद्भवा-
नारोहन्ति खगैर्विदारितफणा व्यग्रा लुठन्त्यञ्जसा ।
साधूनामपकारमाकलयितुं निर्हेतुकं ये रता-
स्तेषां दुर्मनसां तदेव घटते दैवात्सदा सुन्दरि ! ॥१०॥

पाषाणैरासमन्तााच्छिथिलितगमना घोषयन्त्यो वनांता-
नूर्ध्वं विक्षेपयन्त्यो जललवनिकरां तत्तदुच्चावपातैः ।
गम्भीरावर्तवेगास्तटरुहनिवहान्पातयन्त्यस्समग्रं
कूजद्भिः पक्षिसंघैर्गिलितजलचराश्शैलधाराः प्रयान्ति॥११॥

शुण्डान्तस्थसशैवलोरुनलिनीकाण्डैश्च केचिद्ध्रदे
शुण्डापीतजलैश्च केचिदनयाः क्रीडन्ति मत्तद्विपाः।
शुण्डाग्रैश्च नयन्ति मत्तकरिणीः क्रीडार्थमन्ये बलात्
ते शुण्डोभयपार्श्वरूढरदनाः प्रेक्ष्यास्त्वया मांसलाः॥१२॥

शम्भो! पूरुषपक्षपातमकरोत्सृष्टौ विधाता स्फुटं
सर्वेषां मृगपक्षिणामपि दृढं रम्यं वपुर्दत्तवान्।
पश्य त्वं मृगराजकुञ्जरवृषान्पारावतं बर्हिणं
किं नार्यस्त्वबलाः कृता बत विधेः किंतन्नदुश्चेष्टितम्?॥१३॥

बालेऽसृष्टिविजृम्भणाय विधिना जातिद्वयं कल्पितं
प्राज्ञस्साहसिकस्तयोस्तु पुरुषस्सर्वेषु जन्तुष्वपि।
अर्धाङ्गी गृहिणी वधूः प्रियतमा चानन्दसन्धायिनी
धर्मैस्तैर्विविधैर्विरुद्धवपुषी नैकः प्रधानो भुवि॥१४॥

लोके सुन्दरता जनस्य सततं भोक्तुः प्रमोदाय वै
तस्मादेनमनूनसुन्दरजनं भोगार्थमासां ददौ।
कान्तस्तां चतुराननोऽपि दयितां सम्प्राप्य ही मोदते
किं वा पूरुषपक्षपातमकरोत्स्त्रीपक्षपातं वद॥१५॥

लुब्धत्वं खलु रम्यवस्तुनिचये युष्माकमब्जानने
बालानामपि लालसो विधिवशादायौवनंमातृषु ।
दारेच्छासमुदेति सन्ततमहो पुंसां किमालम्बनं
सौन्दर्यं यदि नास्ति पूरुषगणे व्यग्रा भवेयुर्जनाः ॥१६॥

स्वर्णाद्याभरणनिचुम्बननखच्छेदानि दानानि वा
रत्युन्मादकभेषजानि भुवने स्त्रीतोषणान्येव हि ।
पुंसामेषु न चैकमप्यभिहितं रत्यन्तसेवां विना
किं वा पूरुषपक्षपातमकरोत्स्त्रीपक्षपातं वद ॥१७॥

दासी भर्तुरिति ब्रुवन्ति मुनयो वामां कथं शंकर !
व्यत्यस्थानि वचांसि कैतवधिया ब्रूषे न युक्तं तव ।
व्यत्यस्तं न न कैतवं न वितथं देवि ! त्वयाऽहं शपे
दास्यं किं शृणु पादताडनमपि प्राप्नोति वाहो यथा ॥१८॥

यस्सूते भुवनानि यस्य निगमा श्वासाऽनिमेषाः कलाः
सर्वेभ्यः प्रविभज्य सृष्टमखिलं हृत्कोशमध्यंगतः ।
मायावीव निगूढवच्चरति यस्साध्यो न वागादिभि-
स्तं वन्द्यं नहि वक्तुमीदृशमुमे!युक्तं यथेष्टंविधिम् ॥१९॥

तस्याः कोमलमांसलाङ्गसुषमां दृष्ट्वा प्रसन्नान्तर-
स्सर्वस्वं च ददाति कामविधुरः प्रेमाभिवृद्ध्यै बहु।
इत्थं दासजनान्स्वयं यदकरोत्प्राज्ञान्विवेकोन्नतान्
तत्किं पूरुषपक्षपातमथवा स्त्रीपक्षपातं वद ? ॥२०॥

## स्त्रीपुंलक्षणानि

### चेष्टितानि

### धर्माश्च

पुंसः कर्षति तीव्रमेव किमहो ! कामेश गुह्येन्द्रियं
बाले भूमिरसात्मकं तदधुना वातोद्धतं तैजसम्।
स्वाधिष्ठानमितीरितं च सुखदं सर्वेन्द्रियाप्यायकं
ग्राम्या तद्विषयैकभोगजनिता वाञ्छा सदा बाधते॥२१॥

व्रीडाच्छादितमानसं परिचयाद्भावैर्विना नेतरैः
कामिन्यः खलु शूचयन्ति विरहादेते तु पुञ्जन्तवः।
कामोन्मादविमुक्तधर्मविनयाः कूर्दंति ताभिस्समं
स्त्रैणं श्लाघ्यमनिन्दितं च भगवन्धिग्गर्हितं पौरुषम् ॥२२॥

२

त्यक्त्वा नीडमरण्यसस्यमभितस्सम्पाद्य कण्ठस्थितं
पोतेभ्यः प्रविभक्तुमन्यविहगैरायान्ति खे मातरः ।
भुक्त्वा स्वोदरपोषणार्थमखिलं धावन्ति पुंपक्षिणः
क्रीडार्थं करुणा न तेषु भगवन्धिग्गर्हितं पौरुषम् ॥२३॥

व्याघ्राणां शृणु वच्मि कामजनितं घोरं महत्पातकं
हत्वा कुञ्जगतान्स्तनन्धयवरानप्राप्तनेत्रस्फुटान् ।
जातापत्यविनाशशोकविधुरां व्याघ्रीं रजस्स्राविणीं
चञ्चद्वालगुरूत्तमांगकलितास्चुम्बन्ति धिक्ताडिताः ॥२४॥

यस्मिन्कर्मणि तर्पितानि विषयैर्यावन्ति खान्युत्सुका-
त्तत्संख्यानुगुणप्रभूतविषयानन्दोत्सुकस्यान्नरः ।
किं त्वस्मिन्वनितासमागममहानन्दे तु सर्वेन्द्रियं
सन्तृप्यत्यधिकं ततस्तदुदिता वाञ्छा नरान्बाधते ॥२५॥

हेमाभा नवयौवना मदवती मत्तेभकुम्भस्तनी
दीर्घापाङ्गविलोलतारकदृशा संलापयन्ती मुहुः ।
जीर्णस्यापि तनोत्यनूनकुतुकं स्वान्तःपुरस्था सती
मेघच्छन्नमपीन्दुखण्डमुदये सिन्धोर्यथा सुन्दरि ! ॥२६॥

स्त्रीपुंसोरिह देहधर्मकथनाज्जानासि तत्त्वं शिवे !
दक्षः शुक्रविधारणे तु पुरुषो वीजस्य दाता पुनः ।
न स्त्री देहबलान्वितापि रजसस्स्रावं निरोद्धुं क्षमा
तस्मात्तामबलां वदन्ति मुनयस्तस्याः पुमान्पोषकः ॥२७॥

गर्भस्थं प्रसवान्तमात्मतनयं रक्तेन पुष्णाति या
स्तन्येन स्वशरीरजेन सततं पथ्यान्नजन्येनसा ।
किं न स्यादवला प्रसूतिविधुरा यावद्रजोदर्शनं
किं न स्यात्पुरुषो बलाधिकजनिः प्राज्ञश्च धीरश्शुचिः॥२८॥

तादृग्धातुविहीनकायकलिता दीर्घोज्ज्वलन्मूर्धजा
किं वा स्यादवला मलाधिकशिरःक्रोडा कलाकोमला
बुद्धिस्थानमिदं कपालकुहरं तत्रैव केशोत्करः
तत्रोत्पन्नमतेः कथं विमलता किं धीरता योषिताम् ॥२९॥

दम्पत्योः प्रेमसीमा न हि भुवि दयिते नैव निन्द्यं न गोप्यं
विस्रम्भोच्छूनभावैस्तनयधनगृहान्वर्धयन्तौ स्वशक्त्या ।
संसारं सारहीनं सुखमिवसकलं भावयन्तावदीनौ
मत्यक्तौ ब्रह्ममाये स्फुटमिव जगतां कारकावित्यवेहि ॥३०॥

धातूनां खलु वीर्यमस्ति निकरं प्राणश्च तेजस्तथा
तेनासौ पुरुषो बलाधिकजनिः सर्वेषु जन्तुष्वपि ।
नैतादृक्किलशोणितं तु ललना देहोद्गतं मृत्समं
तस्मात्तामबलां वदन्ति मुनयस्तस्याः पुमान्पोषकः ॥३१॥

यावच्छुक्रमुदेति धातुगहने तावत्परीरम्भणं
प्रेयस्याः परिचुम्बनं तदपरं निर्भुग्नपीनस्तनम् ।
चक्षुभ्यामपि नेक्षते त्यज सखीत्युच्चैः कठोरं वचः
सोत्कण्ठां दयितां च शान्तविरहो ब्रूते रतान्ते युवा॥३२॥

पूर्वोपार्जितकर्मसञ्चयवशाद्येप्राणिनो व्रीहितां
सम्प्राप्ताः पुनरेव ते प्रभवितुं पुंसां शरीरं गताः ।
तद्रेतः प्रसवार्थमेव स पुमान्चेष्टां करोतीदृशो–
मासन्ने प्रसवे कदापि ललना धत्ते क्षणं किं शिशुम् ॥३३॥

घोरारण्यतिरोहिताद्रिशिखरध्वान्तान्तरे बर्हिणं
दृष्ट्वाऽन्यां च तडित्प्रभासु शिखिनी साकूतमुद्वीक्षते ।
न्यक्कृत्वाऽपि घनस्य गर्जनमहो रुद्धं हि केकायते
द्विष्यन्ति प्रमदाश्च मानिनि न चेत्सम्भाविता आर्तवे॥३४॥

स्त्रीणामार्तवदर्शनात्पटुतरा वाञ्छा समुज्जृम्भते
पुंयोगार्थममी विवाहविधयः पूर्वे तु निर्वर्तिताः ।
यावाऽऽसन्नमुपैति मोहविकला निन्द्यं जनं कुत्सितं
सा स्त्री कस्य भवेत्प्रसूतिरधुना गोत्रं भवेन्निन्दितम् ॥३५॥

शास्त्राणां खलु सारमेकमधुना वक्ष्ये मतानां शिवे
यं भोगा न विमोहयेयुरखिला राजाधिराजस्य वा ।
यं नार्यस्सविलासविभ्रमलसच्चेष्टाभिरुद्रेकिता
यं भक्ष्याणि सुसंस्कृतान्यपि सुधीः शूरस्स वै पण्डितः॥३६॥

अन्यामन्यां तथान्यां परिणयति पुमान्धर्मसन्तानवृद्ध्यै
किं न स्याद् भर्तृहीना दिधिषुरपि कथं निन्द्यते ब्रूहि शम्भो !
बालेप्रारब्धदोषात्परयुवयुवतीक्रीडितानीक्षयन्त्यः
स्मारंस्मारंनिशायांनिजपतिविरहाद्दुःखितास्सन्तिनार्यः।३७

प्रज्ञावान्यदि संहतेन्द्रियबलो गाङ्गेयतुल्यो भवेद्-
धीरस्सञ्जितमन्मथः क्रतुमयो नापेक्षते लौकिकम् ।
स्वच्छन्दं मृतिमेष्यति स्वतपसा लोकानवत्यादरा-
न्नो चेन्नश्यति पण्डितोऽपि न चिराद्वीरो यथा रावणः॥३८॥

या नारी पतिमेव चित्तफलके संस्थाप्य हृष्यत्युमे !
तस्यास्सन्ततिरप्यनूनविभवा स्यान्निर्मला कीर्तिता ।
या वा स्वैरविहारिणी भवति तद्गोत्रं भवेत्कुत्सितं
तस्मात्सा कुलपालिका सहचरी गोप्या प्रयत्नान्नरैः॥३९॥

धर्मो विश्वस्य मूर्धा युवतिपुरुषयोस्तद्विहीनं विहीनं
तस्माद्धर्माः प्रभिन्ना हितसुतसुहृदां सर्वगोत्रोद्भवानाम् ।
यस्मिन्राष्ट्रे कुले वा विहितमविहितं नाद्रियन्ते मनुष्याः
भ्रष्टं स्यात्तत्समस्तं तनुरिव सुदृढं चोत्तमाङ्गेन हीनम्॥४०॥

मायाकौशलशून्यजन्तुनिवहैर्लोके तु सन्त्रासिते
जिह्वोपस्थनिमित्तकाः पशुसमाः कुर्युर्न किं मानवाः ।
काम्येष्वेव नियोजयन्ति सततं कर्माणि पापे रताः
तेषामुद्धरणे त्वमेव कुशला नान्या गतिः पावनि ! ॥४१॥

इत्याकर्ण्य वचश्शिवेन भणितं रोमांचितङ्गी पुनः
कन्दर्पेन्दुसमानकोमलरुचं सर्वाङ्गरम्याऽऽकृतिम् ।
किञ्चिद्वीक्ष्य शिवं दृशामसृणयाव्रीडानना चेङ्गितं
ज्ञात्वा नेच्छति सा प्रियेण सहसा वक्तुं लिखन्तीभुवम्॥४२॥

क्ष्माभृत्पंक्तिसमावृतेऽतिगहने द्वीपे सुधाब्ध्यन्तरे
लीलार्थं विपुलं मया विरचितं पूर्वं यथोक्तं त्वया ।
प्रासादाग्रनिवेशिताच्छकलशन्यस्तप्रदीपालिभिः
पश्येदं तव देवि ! रञ्जितपदं पूर्णेन्दुबिम्बोपमम् ॥४३॥

सम्यक्सीत्ये तृणविरहिते देशकालानुरूपं
बीजान्युप्त्वा कृषिकृतमतिस्सीरपाणिस्समन्तात् ।
भूयस्सिञ्चन्सलिलनिवहैस्सस्यवृद्धिं करोति
क्षीराज्यादीन्प्रतिदिनमसौ प्रेषयत्यन्तरीपम् ॥ ४४ ॥

द्रोणक्षीरास्तदनुजमुखैः पालिता अत्र गावो
जग्ध्वाऽऽसायं मृदुलयवसं मांसलास्ते महोक्षाः ।
सन्धीभूताः प्रचुरनिनदा मृद्विलिप्तोत्तमांगाः
क्रीडन्त्यारान्मदकृतरयाः काशपुष्पेषु लीनाः ॥ ४५ ॥

क्षीरोदन्वत्तटविनिहितास्सादिभिर्धारितास्ते
हेषारावैः कविकहननैः फेनराशिं वमन्तः ।
नृत्यन्त्यूर्ध्वं मुहुरपि शनैर्लालिता वेगवन्तो
धारायोग्याः कनकरचितस्यन्दना बद्धवाहाः ॥ ४६ ॥

नीडायातपतत्रिसम्भ्रमरवै श्श्रेणिं गता मर्मरै-
स्सान्द्राऽरोहतटद्रुमाः किसलयैः पुष्पैः फलै रञ्चिताः।
क्षीराब्धौ प्रतिबिम्बिता अभिमुखं निक्षेपिताऽऽदर्शके
नूनं वासकसज्जिका इव शिवे ! सन्दर्शनीया मम ॥४७॥

पश्यैतान्विबुधान्सुधार्णवचलत्तुङ्गोर्मिमालाजलाऽ—
स्फालक्षालितसान्द्रसानुविलसद्रत्नप्रभामण्डले ।
नौकामध्यगतानुपेत्य रभसं संस्तुत्य सांयात्रिकान्
सिन्धुं तारयितुं नमन्ति विबुधास्त्वद्दर्शनोत्कण्ठिताः॥४८॥

अष्टौ लोहमयानि सन्ति दश वै दुर्गाणि रत्नैश्शिवे !
यद्यद्येन कृतं तदेव सकलं षुर्यष्टकं देहिनाम् ।
आधिव्याधिजराविपत्तिरहितास्सम्पूर्णकामाः प्रजा-
स्संपश्यन्ति मुदान्विताश्च ललिते त्वामेव विद्युन्निभाम्॥४९॥

गीर्वाणयोमणिमन्दिराङ्गणमुखे स्वीकृत्य दास्यस्थिताः
जातीचम्पकमल्लिकासुमचयं पाद्यं च नीराजनम् ।
एवं ह्यर्चितुमादरेण मधुरं गायन्ति ते मङ्गलं
पाणिं देहि मरालमन्दगमने ! मन्दं नयाम्यग्रणीः ॥५०॥

## पट्टाभिषेकः

गायद्भिस्सुरकिन्नरोरगगणैर्वीणादिवाद्याञ्चितैः
स्तोत्रैरुद्यदनल्पकण्ठमधुरस्वानैस्तथा सामगैः।
कर्पूरागुरुमिश्रपुण्यसलिलोपेतैर्मुनीन्द्रैर्मुदा
श्रीमातुर्मणिमन्दिरे शुभदिने पट्टाभिषेकः कृतः ॥५१॥

## विवाहः

त्यक्त्वा भैक्षं कपालं विषधरवलयान्कर्कशां शुष्ककृत्तिं
गङ्गामाच्छाद्य विभ्राट्सविनयनटनैः कोटिकन्दर्परूपः।
लीलाभिर्नर्मवाक्यैरुपवनसदने क्रीडयन्दर्शयंस्तान्
पीयूषं पाययित्वा स्ववशमकृत तां मोहनाङ्गीं महेशः॥५२॥

पार्श्वस्थाः खलु वीजयन्ति मुदिताश्शच्यादयश्चामरैः
स्वर्वेश्याभरतादयो मुनिवरा मार्दङ्गिका वैणिकाः।
जृम्भामञ्जुमुखाम्बुजां स्मितमुखीं सिंहासनाधिष्ठितां
गायन्ति क्षणदास्तु तामनुदिनं शृङ्गारके मण्डपे ॥५३॥

ये पूज्याश्शतकोटिजन्मसुकृताऽनीकैस्त्रयो कर्मभि-
र्दुर्दान्तेन्द्रियमर्दनैकचतुरै र्योगैश्च वन्धानुगैः।
विज्ञानेन च सात्त्विकेन तपसा प्राप्ताः कथञ्चित्पदं
तेभ्यस्सादरमेव मुक्तिसदने मुक्तिं ददात्यम्बिका ॥५४॥

अज्ञानावृतचित्तवृत्तिकलिताश्श्रुत्यादिभिस्तत्त्वत-
स्तद्ज्ञातुं न हि तेऽपि सन्ति कुशलास्सम्बोधिताः परिड
निष्कामान्ययुतानि वैदिकमहासत्राणि नो मोक्षदा-
स्त्वेकं संसृतिनाशकं च सुखदं ज्ञानं ददात्यम्बिका॥५

एकान्तेमृदुतूलिकासनगता ताम्बूलरक्ताधरा
नीचैस्सुस्थितचेटिकाकरतलैस्संवाहितांघ्रिद्वया ।
इन्द्राद्यष्टदिगीश्वराष्टसचिवस्मृत्यादिशक्त्यावृता
तत्तत्कर्म पृथक्पृथग्विधिमुखान्स्मेरानना पृच्छति ॥५६

ब्रह्मन्! भूरुहजीवजाण्डजजनिर्लोके कथं स्यात्त्रिधा
वक्ष्येऽहं त्रिविधैर्नराः पुनरमी पापैर्भवन्ति त्रिधा ।
तत्राद्यैरफलग्रहद्रुमलताश्शाल्यादयः कायिकैः
कीटाः पञ्चनखादयो जलचरा नीडोद्भवा वाचिकैः॥५७

व्याधिग्रस्थशरीरिणश्च वृषला भिल्लादयो मानसै-
र्मिश्रैस्सात्त्विकराजसैस्सुकृतिनस्तस्मिन्जडे जन्मनि ।
स्थानं प्राप्य गुणान्वितं तव कृपालेशात्क्रमाज्जन्मना-
मन्ते यान्ति दिवौकसामपि पदं हेतुर्न नाहं शिवे! ॥५८

पाषाणेषु न विद्यते हि तमसामुद्रेकमेकं विना
वृक्षेषु त्वगहंकृती रसमयं चैतन्यमुज्जृम्भितम् ।
तिर्यग्जन्तुषु खेचरेषु नमतिस्स्वप्ने यथा स्यान्नृणां
तस्माज्जन्तुषु मानवोऽतिनिपुणः कर्माधिकारी नरः ॥८९॥

भानौ दक्षिणमार्गगे जलकणैस्सान्द्रो भवेन्मारुतः
जीवानामपि रंहणं न सुकरं पर्जन्यलोकं प्रति ।
एतस्मान्नचिराद्भवन्ति तुहिनं पत्रेषु कीटादयः
नास्त्येषां न हि पुण्यलोकगमनं तद्वै तृतीयंपदम् ॥९०॥

शब्दस्फोटरसानुमोदरहितास्संशोकजाः कीटकाः
तेषामेकमिहास्ति तुच्छकुहरं पाय्विन्द्रियं कार्मिकम् ।
बीजं नापि च पैतृकं रविकरस्पृष्टं मनस्तद्विना
नास्त्येषां गणनं ततश्श्रुतिमुखे त्रीण्येव जन्मानि वै ॥९१॥

कौशल्यं न मृगाण्डजेषु तरुषु प्रारब्धभोगं विना
पापं कर्तुमकर्तुमद्य निपुणः सर्वाधिकारी नरः ।
जिह्वोपस्थसुखानुभोगकलया जीवन्ति मूर्खाधमाः ।
ते जायन्ति पुनर्म्रियन्ति शलभाः कीटाः पतङ्गा इव ॥९२॥

लक्ष्मीनाथ! कुतूहलं भवति मे श्रोतुं जगत्पालनं
निस्वस्स्यादपि भूपतिस्स्वचरितैर्भूपोऽपि भिक्षाशनः।
भूपोत्संगगता भवन्ति मलिनाश्श्वानः कुरङ्गादय-
स्स्वातन्त्र्यं मम नास्ति कर्मवशगा ब्रह्मादयोऽप्यम्बिके॥

क्रूरत्वं त्वयि दृश्यते हर! जनाश्शोचन्ति युक्तं न ते
घोरं मारयसीति निर्घृणतया किं पातकं तैः कृतम्।
तथ्यं तत्कथयामि यत्परिणतं पूर्वार्जितं देहिनां
कर्तुं कर्मफलं मनागपि वयं न्यूनाधिकं न क्षमाः॥६४॥

राज्यं किं नु? शचीपते!महदपि भ्रष्टं भवेन्निन्दितं
धर्मो यत्र न विद्यते च नियमा वेदाश्च वर्णाऽश्रमाः।
स्वैरिण्यश्च चरन्ति यत्र ललना नीचाश्च विद्वज्जनाः
तद्राज्यं कुरु भूपतेरिव शिवे! दग्धं च गोत्राङ्कुरम्॥६५

किं चान्यच्छृणु वच्मि देवि! ललिते!ब्राह्मीं प्रवृत्तिं शि
यो वा वाञ्छति नित्यमेव मनसा गोब्राह्मणेभ्यः शुभम्
यो वा गायति सन्ध्ययोरनुदिनं त्वामेव मेधाऽतिथिं-
नाऽमेध्यं च भुनक्ति यस्तु पशुवन्नेज्यस्स किं ब्राह्मणः॥६

मन्त्राधीनमिहास्ति दैवतमिति प्रोचुः कथं तत् प्रभो !
क्लीं काराङ्कितमन्त्रशक्तिमखिलां देवि ! ब्रवीम्यादरात् ।
प्राणायामवशंगतान्तरधिया ध्यायन्प्रतीकाकृतिं
मन्तोपासितदैवमेति मननात्कीटो यथाऽन्यद्वपुः ॥६७॥

किञ्चिज्ज्ञाः कलिदोषदूषितधियो जल्पन्ति वैतण्डिकाः
मन्त्रानैव फलोदया न हि फलत्यष्टांगयोगस्तथा ।
मन्त्रार्थं गुरुणा प्रचारमखिलं ज्ञात्वा कृतं चेत्तपः
प्राशव्यं लभते हि निश्चितमिदं दृष्टं च गुप्तं मया ॥६८॥

पञ्चाशद्भिरमी भवन्ति मनवष्षट्चक्रमध्यस्थितै-
र्वर्णैस्तैः प्रभवन्ति मन्तुरखिलाऽभीष्टप्रदाः पावनाः ।
ये नित्यं मनसा विभाव्य मननं कुर्वन्ति योगान्विता
जानन्त्येव महर्षयस्सुकृतिनस्ते वीतहव्यादयः ॥६९॥

भीतिर्वै शवदर्शनात्प्रभवति स्त्रीणां कुतो जांगला-
न्मित्रत्वं खचरस्य तद्दिनमणेः पंकेरुहाणां कुतः ।
शक्तिर्ग्रावविभेदिनी च महती चाग्नेयचूर्णे कथं
तत्तर्केण महत्तरेण तपसा ज्ञेयं वृथाऽन्यत्खलु ॥७०॥

शून्यार्थध्वनिमात्रकास्सरिगमा गीता मुदं तन्वते
शून्यार्थं ध्वनिमात्रकं शिशुकृतं दैन्यं च तद्रोदनम् ।
किं ब्रूयाद्धनमन्त्रशक्तिमनघे ! स्वर्गापवर्गप्रदां
चित्तैकाग्र्यबलाच्च तस्य मननात्तच्चैति तद्रूपताम् ॥७१॥

कल्याण्याः प्रतिमध्यमे यदि भवेदेकैव नीचा कला
भ्रष्टा स्यादिह चञ्चलेन्द्रियमनोबुध्यादिभिर्बाधितः ।
प्राणंचैकमथावलंब्य कुरुते कर्माणि काम्येच्छया
किं स्यात्तस्य यमादिकेषु विधिषु न्यूनं तदेकं यदि ॥७२॥

रागा औडवषाडवा निगदिताः पूर्णास्तथा वक्रगाः
ते सर्वेऽपि भवन्ति जन्तुसुखदास्तैरेव सप्ताक्षरैः ।
तद्भावं मृदुमाधुरीं सुवचनैर्गीतिं विना कण्ठजां
वक्तुं नाहमलं त्वमप्यकुशला वेत्तुं प्रभावं मनोः ॥७३॥

किं रुग्णस्य महौषधस्य मननाद्रोगोपशान्तिर्भवेत्
भक्ष्याणामपि चिन्तनेन शतधा तृप्तिर्विना भोजनम् ।
सन्तानं न हि भाषणे न विधिवन्नार्या विवाहं विना
तत्तत्कर्मबलाद्विना किमु भवेत्कार्योत्सवः प्राणिनाम् ॥७४॥

मल्लानां मृगराट्समानपटुता व्यायामदार्ढ्यंविना
मेधावी चतुराननोऽपि चतुरश्शिक्षां विना गायकः।
बालानां पठनाद्विना च मननाच्छास्त्रप्रवेशोऽपि वा
तद्वत्कर्मबलाद्विना कथमहो कार्योत्सवः प्राणिनाम्॥७५॥

आकाशेस्त्यवकाश एव पवने स्पन्दश्शुचौ दाहता
नीरे च द्रवताऽवनौ कठिनता नैसर्गिकं लक्षणम्।
तज्जन्यं विविधेन्द्रियं स्वविषयं चालंबते तद्गुणं
तस्माचास्य निरोध एव सततं कार्यः प्रयत्नान्नरैः॥७६॥

सर्वं त्वत्त्रिगुणात्मकाज्जगदभूल्लोका वयं मूर्तय-
स्तिस्रो वै तव शक्तयस्त्रिभुजगो मेरुस्त्रिकूटो मनुः।
जाग्रत्स्वप्नसुषुप्तयस्तनुभृतां देहास्त्रयो ऽप्यग्नयो
जन्मव्याधिनपुंसकादिसकलं त्रेधाविभक्तं खलु॥७७॥

त्रीण्युक्तान्यघमर्षणानि भुवने नृणां क्रियाणां कलौ
तत्राद्यं फलपुष्पधूपरचिता पूजा च योगादिकम्।
पापं कायिकमेव हन्ति सकलं ह्यङ्गावबद्धं च त-
न्मन्त्रं वाचिकमेव हन्ति मननाचाद्वै प्रतीकं स्मृतम्॥७८॥

ध्यानं चित्तमलापहं शिवकरं चक्षुष्पतिर्भूतिमान्
धीरस्तत्र भवेत्क्रमाच्छिवमयस्सर्वेश्वरस्सर्ववित् ।
ध्येयस्य स्फुरणादहं स्फुरति ताश्शाण्डिल्यविद्यादिका-
स्तस्मादेतदहं ग्रहं मम मतं तेनैव साध्या वयम् ॥७९॥

सौख्यं नैव हि कायिकं तृणसमं मांसत्वगाराधनं
तस्माच्चाद्रसनाविनोदमधिकस्सर्वेन्द्रियाद्वारकम्
श्लाघ्यं मानसिकं प्रशस्तमतुलं सर्वेन्द्रियाह्लादकं
तस्मान्मानसमेव कर्म परमं श्रेयो निदानं विदुः ॥८०॥

सर्वेषामपि कर्मणां च दयिते ! सारं भणाम्युत्तमं
मन्त्राम्बोधिसमुद्यतेन्दुशकलं योगाब्जकन्दं शिवम् ।
वाग्रूपाऽखिलवेदशास्त्रकुहरं ब्रह्मामृताम्भोनिधिं
तद्बीजं प्रणवं विदुर्जगदिदं सर्वेऽपि तज्ज्ञा वयम् ॥८१॥

प्रारब्धाच्चपलादुदेति विषमे वाञ्छा पदार्थे नृणां
तत्तद्भुक्तपदार्थसंस्थितरसात्तद्धातुवृद्धिर्भवेत् ।
तेभ्यस्तद्रिपुशाखिका तु विटपी जिह्वाऽस्ति मूलं दृढं
तत्प्रीत्यै लवणं तु कल्पितमिदं तद्वै नरानत्ति च ॥८२॥

तत्त्यक्त्वा लवणं यमाच्च नियमाच्छान्तांतरंगो भवे-
द्धीरस्सञ्जितमन्मथः क्रतुमयो नापेक्षते लौकिकम् ।
औदासीन्यमुपेत्य पश्यति भुवं मृत्पिण्डतुल्यं घनं
साध्यं नैतदनन्तजन्मसुकृतोद्बोधं विना प्राणिनाम् ॥८३॥

## अपक्वाहार पद्धतिः

वृक्षाणां चिरजीविनां चिरधृतं युक्तं फलं भक्षणे
स्निग्धं शुष्ककपालमध्यपिहितं दत्तं प्रकृत्या स्वयम् ।
शाखा शून्यतरोस्तु सस्यमतुलं सर्वर्तुलभ्यं पुन-
स्तत्सर्वं यदि सात्विकं च यकृतः प्लीहस्तथा पुष्टिदम् ८४

## कर्मविपाकः

सर्वज्ञोऽसि सविस्तरं कथय मे नान्यो भवादृग्विभो !
कोऽनामी दुरितेन पङ्गुबधिरा अन्धाश्च मूकाः कथम् ?
पुंश्चल्यो मृतभर्तृकास्स्वपतिभिस्त्यक्ता अवीराः कथं ?
योषिद्वेषधराः कथं नु पुरुषाष्षण्डा भवेयुः कथम् ? ८५

श्लाघ्ये कर्मणि विघ्नकृन्नरपशुर्जायेत पंगुश्शिवे !
स्याद्देडो गुरुनिन्दकस्तु जननीहन्ता विलुप्तेक्षणः ।
मूकत्वं श्रुतितस्करस्य विहितं यः कामिनीविप्रकृ-
च्छैलूषस्स भवेत्परं कुपितया षण्डश्च शप्तस्तया ॥८६॥

यस्साध्वीं नवयौवनां स्वगृहिणीं काले त्यजत्याग्रहात्
स स्यात्स्त्री मृतभर्तृका बुधजनच्छेत्ता च कुष्ठी भवेत् ।
मूर्खात्तः पितृहाप्यपत्यरहितो द्रोही सुरापः क्रिमि-
र्माण्डव्यस्य कथा स्मृता यदि ततश्शिष्टं स्वयं ज्ञास्यसि।८७।

भुक्तान्नेन मदोत्थतस्सुवयसा पित्राऽर्जितोरुश्रिया
कान्तां दृष्टिपथंगतां परसतीं ध्यायन्पुनस्तां पुनः ।
कामी स्यात्पुरुषस्तथैव कुलटा नारी च दुश्चिन्तया
सारङ्गैस्सह किंदमो मृगवपुः क्रीडन्हतः पाण्डुना ॥८८॥

लुब्धास्स्वार्थपरायणाः परधनं लब्ध्वा कुसीदोद्भवं
क्षुद्बाधाकुलपुत्रदारसहिताः क्षुद्रा भवन्ति ध्रुवम् ।
एते कर्मरता विनैव मननं कुक्षिंभरा वेतनै-
र्ज्ञानी कर्मनिरासकश्च खलपूर्द्वाभ्यां धनी भूपतिः ॥८९॥

## गर्भोपनिषत्सारः

पिण्डोत्पत्तिकथां च मे वद विभो ! युग्मं कथं स्त्रीपुमान्
वक्ष्येऽहं तव विस्तरेण सुभगे ! गुह्यं तदाकर्ण्यताम् ।
भुक्तं वस्तुरसस्ततो नु रुधिरं मांसं च मेदोऽस्ति त-
न्मज्जा स्यात्पुरुषे च शुक्रमबलादेहे तथा शोणितम् ॥९०॥

संयोगात्कललं च बुद्बुदनिभं स्यात्सप्तरात्रोषितं
मासार्धेन च पिण्डरूपमनघं मासेन तत्कर्कशम् ।
द्वाभ्यामेव शिरस्त्रिभिश्च चरणौ गुल्भं चतुर्भिः कटिः
पृष्ठं पञ्चभिरिन्द्रियान्वितवपुष्षड्भिस्ततः प्राणवान् ॥६१॥

लब्धाङ्गेन्द्रियवर्गान्क्रमेण जननी भुक्तान्नपानादिभि-
स्सन्तृप्तः शिशुरेधतेऽथ चरमे काले तु गर्भाशये ।
दुःखाब्धौ पतितोऽहमित्यनुपदं क्रोशन्स्मरन्प्राक्तनं
देवान्निष्क्रमणाय नौत्युदरतो जीवः पुरीषं गतः ॥६२॥

स्त्रीपुंभेदमितो ब्रवीमि पुरुषो रेतोऽधिकत्वात्पुनः
स्त्री चाप्युत्तमशोणिताधिकत्वशात्साम्ये द्वयोर्नद्वयम् ।
गर्भागारगताऽनिलाऽऽहतमिदं युग्मं समं वाऽसमं
दम्पत्योस्सुखसङ्गमो यदि न चेदन्धश्च कुब्जशिशुः ६३

## पञ्चाग्निविद्या

यद्यत्कर्मकृतं नृभिस्त्रिकरणैस्तत्साम्यरेतस्सिचां
पञ्चत्वं गतदेहिनः क्रमवशात्सूक्ष्मं शरीरं गताः ।
अभ्रं मेघमथो जलं च पृथिवीं लब्ध्वा पुमांसं स्त्रियं
भूयस्ते प्रभवन्ति छान्दसमहापञ्चाग्निविद्यैव हि ॥६४॥

प्रारब्धं खलु दुस्तरं तव च मे किं मानुषाणां पुन-
स्तद्दैवं पशुबुद्धयस्तु सततं त्वां मां च निन्दन्ति वै।
यच्चीर्णं करणैस्तदेव करणैर्भुक्ते शुभं वाऽशुभं
किं वाऽस्त्यत्र हि कारणं तव च मे किं दूषणं पावनि! ९५

यत्कोणाकृतिमेत्य भानुकिरणाः कुर्वन्ति बिम्बं जले
तत्कोणाकृतिमेत्य बिम्बमपरं भित्तौ हठान्निर्गतम्।
यद्भावेन करोति कर्म सकलं नित्यं तथैवाऽधुना
तद्भावानुगुणं फलं स मनुजः प्राप्नोति नैवाऽधिकम् ॥९६॥

एतस्मादिह जीवजाश्शिवमयास्सृष्टौ लताभ्यस्मृताः।
तेषां चापि नरोत्तमः शिवमयस्तस्मिन्प्रधानं रजः।
तज्जित्वाऽपि च सात्विकेन तपसा सत्त्वाधिकस्सन् क्रमात्
ब्रह्मानन्दरसैकपूर्णजलधिस्स्यान्निस्तरङ्गप्रभुः ॥९७॥

इत्युक्त्वा विरराम खण्डपरशुस्तास्ताः पवित्राः कथाः
श्रुत्वा तास्सकला ननन्द ललिता तत्याज सिंहासनम्।
तामालम्ब्य मुदान्वितस्सरभसं धीरं दिनान्ते प्रभुः
चैत्योद्यानमियाय तैस्सहचरैः क्रीडार्थमुत्कण्ठया ॥९८॥

देवी बालार्कवर्णा निरुपमविभवा हंसपत्त्राधिरूढा
स्वैरं वातोत्थतैस्तैर्विषयविषधरैर्ह्लादिताकामरूपा ।
गायन्ती चेटिकाभिर्झणुतकधिमितेत्युग्रवादित्रघोषा
कामेशे नावरोधे शतदलकमले कन्दरे क्रीडते सा ॥६६॥

॥ इति द्वितीयोऽध्यायः ॥



## तृतीयोऽध्यायः ।

या शक्तिः सृजतीह विश्वमखिलं सृष्टं यया धार्यते
यस्यामेव विलीयते पुनरिदं या कीर्त्यते शाश्वती ।
सा शक्तिस्समुदेति चित्तजलधौ राकासुधांशुर्यथा
कर्तव्यं किमिहास्ति कांक्षितमहो धन्योऽस्मि धन्योऽस्म्यहम् ॥ १॥

रक्ताम्भोधिसरोजमूलजनिताखद्योतचन्द्राऽनल-
स्फूर्जन्नेत्रमनोहरा च भुवने या प्राणिजीवाभिदा ।
सोदेति प्रसभं ममाद्य दहराकाशे सुधांशुर्यथा
प्रत्यूहाभ्रशतं प्रमृष्टमधुना धन्योऽस्मि धन्योऽस्म्यहम् ॥२॥

यस्या द्वादश भानवः परिचरास्तावन्त एवेन्दवो
द्व ावेतौ न हि गोचरौ यदि तदा दह्याद्धरित्रीं रुषा ।
सैषाभ्यासकचण्डमृत्युभुजगी बन्धं गता सेव्यते
विस्रब्धेन मया दिवानिशमहो धन्योऽस्मि धन्योऽस्म्यहम् ॥३

ग्लौसूर्यादि विपक्षखेचरगणाक्रान्तं न वाताहतं
नोत्पत्तिस्थितिनाशहेतुमुदितं स्वस्थानमाप्तं मया ।
तत्रत्यस्य न मे क्षुधा नहि तृषाग्लानिर्न चित्तभ्रमः
किं त्वानन्दरसं पिबामि महते धन्योऽस्ति को वाऽधिकः ॥४

राज्यं प्राप्तमुमे ! हिरण्यनिधिरप्यज्ञानदारिद्र्यनुत्
तेनैवाहमुदारधी विलसितः क्रीत्वा तु स्वर्गादिकान् ।
भुञ्जाम्यद्य मनोहरांश्च विविधाभोगान्यथेष्टं शिवे !
को वान्योधिकभाग्यवानिह महते धन्योऽस्ति को वाऽधिकः ॥५

नादातीतमतीन्द्रियं स्फुटरसं ध्यानैकसाध्यं निजं
ज्ञातुं रूपमिदंतया न चतुराश्शक्तास्सुमेधाविनः ।
गूढार्थप्रतिपादकान्युपनिषद्वाक्यानि चाऽहं धिया
स्वार्थे चानुनयन्ति तत्त्वमखिलं जानामि धन्योऽस्म्यहम् ॥६

एतद्द्वै श्रुतिचोदितं मम मतं स्वाराज्यसिद्धिप्रदं
द्वैतं नापि न वैष्णवं क्रतुमयं चाद्वैतब्रह्मामृतम् ।
या ब्रह्मादि पिपीलिकांततनुषु प्रोता जगत्साक्षिणी
सैवास्मिन् परिणामशीलमधुरा ब्रह्माभिदा सेव्यते ॥७॥

दूर्वासादिमहर्षिभिश्शिवतमा या वा वशिष्ठादिभिः
या वा शंकरभास्करादिकविभिश्चान्यैस्सदा सेविता ।
यावेष्टा मम देवता शिवमयी या वा मया सेविता
सा सा सा त्वयि चऽस्मि ता च ममता सा सेवनीया त्वया८

पाषाणेषु च पांसुखण्डनिवहे लोष्ठे च लोहे तथा
सर्वेष्वप्यणुभिस्समं सुरुचिरं बद्ध्वा स्थिरं तिष्ठति ।
तत्सत्यं तदिहाऽस्ति शक्तिरपि तद्ब्रह्मेति सङ्कीर्त्यते
तज्जानीहि तदेव ब्रह्म परमं जिज्ञास्यतां स्वात्मनि ॥९॥

सत्यं चिद्घनमेव बुद्धिरपि तच्चाहं कृतिस्तन्मनः
कर्मज्ञानदशेन्द्रियाण्यपि चितस्सर्वं विवर्तायितम् ।
सुप्तावप्यधिकं विभाति विशदं चाऽऽनन्दसान्द्रं घनं
तज्जानीहि तदेव ब्रह्म परमं त्वय्यस्त्यवस्थात्रये ॥१०॥

काष्ठे चाग्निरुदेति तत्कथमहो ! निष्पेषिते मानवै-
स्सिन्धौ वा वडवानलोप्यसदृशैस्संक्षोभिते मारुतैः ।
ब्रह्मेदं परिदृश्यमानमखिलं त्वय्यस्ति तत्त्वतः
स्वान्तर्ज्योतिरवेहि तीव्रमननैर्गूढं निजान्तर्गतम् ॥११॥

या नीरोदरबाष्पशक्तिरखिला यन्त्रेषु सा दृश्यते
ताम्रोज्जृम्भितशक्तिरेव झडिति स्फूर्जत्यहीनप्रभा ।
शक्तेर्नैव पृथक्स्थितिः क्वचिदतस्सामेति या कीर्त्यते
सन्तृप्णा खलु सर्ववस्तुनिवहे पर्णेषु शंकुर्यथा ॥१२॥

या शक्तिर्विविधेन्द्रियैस्स्वविषयानाश्रित्य तान्लौकिकान्
नित्यं प्रापयते सुखं सुखमितीत्यज्ञान्सदा बाधते ।
या शक्तिर्विविधेन्द्रियैर्विरहिता ब्रह्मैव सञ्जायते
तज्जानीहि तदेव ब्रह्म परमं ध्यायस्व शान्तात्मना ॥१३॥

या माया न हि विद्यते यदि पुनस्सान्ताऽथवा सा भवे
त्स्रष्टा को नु जगत्त्रये जगदिदं सान्तं भवेन्निश्चयम् ।
यावद्भूतकटाहमेतदखिलं सूर्येन्दुतारागणै
र्व्योमाद्यैश्च विराजते तदवधिस्सा ब्रह्मणा शाश्वती॥१४॥

याऽज्ञानन्दघनं पिधाय जगतां दुःखं सृजत्यन्वहं
तामाराध्य महत्तरेण तपसा सम्प्राप्य तस्याः कृपाम्।
ब्रह्मानन्दघनो भवेदुपलवत्तिष्ठेत नैवोपलः
साध्यं ब्रह्म न कर्मभिश्शिवतमा साध्या जगन्मोहिनी ॥१५॥

कर्मज्ञानदशेन्द्रियैश्च मनसस्सम्पद्यते सङ्गमः
तत्रानन्दघनं भवेत्तदुभयोः कर्मेन्द्रियैस्सङ्गमः
संदृष्टा पथि कामिनी किमु भवेन्नालिंगिता चेन्मुदा
तत्कर्मेन्द्रियकर्मजं स्थिरफलं ज्ञानेन्द्रियाणां कृतेः ॥१६॥

यद्गानश्रवणे फलं भवति तत्सौख्यं न तद्वर्णने
यस्साक्षात्करणे सुखं भवति तत्सौख्यं परोक्षे न हि।
यद्ज्ञानेन्द्रियकर्मसम्भवसुखं ज्ञानायते शाश्वतं
तस्मात्कर्मफलं स्थिरं हृदि सदा स्फोटायते ब्रह्मणि ॥१७

यद्बीजं क्षिप्तमुर्व्यां प्रतिदिनमुदकैर्वर्धितं यत्क्रमेण
स्यात्तच्छाखोपशाखैस्सुमफलभरितो वृक्षराजः प्रशस्तः।
तद्वच्छान्तस्वभावः प्रतिदिनमुचितं कर्म कुर्वन्त्रिकालं
तत्साम्यं युक्तकाले फलमनुभवति श्रद्धधानो भवेच्चेत्॥१८॥

यावद्‌ज्ञानघनो न सिञ्चति जलं तापत्रयाग्नौ भृशं
यावत्खानि चरन्ति मारुतसमं यावन्मनो धावति।
यावन्नास्तमुपैत्यहं जलनिधौ ब्रह्मामृते शाश्वते
तावत्कर्म चरेत्सदा त्रिकरणैर्नान्योऽस्ति पन्था स्मृतः ॥१९॥

तां पाषाणनिभां गुहोपरिगताम्मूलामविद्यां शनैः
कुद्दालैश्शुभकर्मभिश्शकलवन्निर्भिद्य तद्गह्वरे ।
न्यस्तं स्वस्यधनं लभेत सुकृती कश्चित्सुखं चाश्नुते
केचित्कामवने चरन्ति पशुवत्सम्मोहिता मायया ॥२०॥

प्रत्यक्षात्खलु वस्तुनिश्चयमतिः कर्माणि नापेक्षते
कार्यं नश्वरमेव कर्मजनितं ब्रह्माऽपरोक्षं स्थिरम् ।
कर्मभ्यस्समुदेति सत्त्वमखिलं नान्यं समुज्जृम्भते
शक्तिः पैत्यविनाशिनी घनतरा कृष्णाभ्रके पार्थिवे॥२१॥

स्वान्तस्थां जगदात्मिकां द्विजवराः कैश्चिन्मकारादिभिः
कामान्धा भवलम्पटा अविधिना त्वामर्चयन्त्यन्वहम् ।
ते नूनं श्रुतिसम्मतं तव मतं कुर्वन्ति निन्दास्पदं
जायन्ते बहुपापयोनिषु पुनस्तैर्दह्यमानाः पुनः ॥२२॥

उत्पाद्यादि चतुर्विधं न भवतीत्याद्यैर्यदुक्तं पुरा
तन्मे भाति समञ्जसं भवति वै किं कर्मणां सङ्गतिः ।
कर्मभ्यः समुदेति जन्म सकलं तद्वै जगच्चालकं
तद्ब्रह्मास्ति तदेव विष्णुरपि तद्रुद्रादयो देवताः ॥२३॥

अस्त्वेतच्छुभकर्मणां दृढतरा यावा मनोवासना
तद्धानाय फलं त्यजेत्कृतमतिर्ब्रह्मार्पणं भावयन् ।
इत्थं ब्रह्मदृशा करोति सकलं नाहं करोमीति य
स्स ज्ञानं दृढमश्नुते जलकणाच्छुक्तौ यथा मौक्तिकम् ॥२४॥

पञ्चभूतोपासना

प्राणो ब्रह्मेति योगी भजति च पवनं व्यानमुद्धृत्य तस्मा-
ल्लीनास्तस्मिन्भवेयुश्चपलतरमनः कल्पनास्तास्समस्ताः ।
सर्वं ब्रह्मेति बुद्ध्या वसति हि विमना ज्ञानवान्निर्विकल्पे
लीनास्तस्मिन्भवेयुस्वयमिव मरुतस्थानमेकं लयानाम् ॥२५॥

आकाशस्य हि पूजनं तु मनसो निर्मूलनं ज्ञानिनां
वायोस्साधनमष्टयोगविधिभिः पूजा स्मृता योगिनाम् ।
वेदोक्तेषु समस्तकर्मसु पुनः पूजा स्मृताग्नेः पुन-
स्सर्वेष्वप्युदकस्य कर्मसु पुनर्भूमेश्शिलानां तथा ॥२६॥

भूतानामिह दाहकस्तु हुतभुक्तेनैव तन्नामधृत्-
तस्यानुग्रहलीलयैव भुवने जीवन्ति वै प्राणिनः ।
कोष्ठाग्नेरुपसर्पणादिह सदा ज्ञानाग्निदाता भवे-
त्तस्याद्भौतिकनामरूपलयकृत्स्वर्गापवर्गप्रदः ॥२७॥

मोक्षस्यास्ति हि साधनं शृणुत भोश्श्रुत्यन्तसारं वच-
स्सर्वेषामिह जन्मनां भुवि सदाह्येकं मनः कारणम् ।
तच्चोदेति सवासनं तु वियतः प्राणैस्समं स्पन्दते
तत्प्राणन्धर ! किं भवेद्धि गगनाच्छून्याद्धि शून्यं खलु॥

पूर्वेद्युः कृतलौकिकं तु सकलं चित्ते यथा लीयते
यद्वत्तत्क्रमशः परेद्युरखिलं सन्धीयते प्राणिनाम् ।
पूर्वेषामपि जन्मनां च चरितं लिङ्गेऽस्ति वै बीजव-
द्दाह्यं तद्बहुधा मुदा सुखपरित्यागेन योगेन च ॥२६॥

## योगमार्गः

यस्सूक्ष्मं क्रमशः प्रविश्य जननीगर्भस्थपिण्डोदरं
प्राणः पञ्चविधं विभाति जठरे भुक्तं पचत्यग्निवत् ।
धातूनां विदधाति पुष्टिमनिशं सूत्रं नुदत्यग्रतः
सस्यादिन्द्रियसारथिस्सुकृतिभिस्सेव्यस्सदा यत्नतः ॥३०॥

योभर्ता च विभर्ति भूतनिकरस्सर्वेन्द्रियग्राहकः
सर्वानर्थविषाकुलस्सुरुचिराभ्यासेष्टसिद्धिप्रदः ।
सर्वोत्कृष्टफलप्रदः कृतधियां सर्वेश्वरत्वप्रदः
ब्रह्माऽसौ किल गोचरः प्रियतमस्सेव्यस्सदा यत्नतः ॥३१॥

श्राद्धे कर्मणि शोभने जपविधौ नित्ये च नैमित्तिके
यं प्राणं न निरुध्य कर्म सकलं नारभ्यते वैदिकम् ।
तं त्यक्त्वा किमु तद्भवेत्फलमहो मूलस्य चेच्छेदनं
तस्मात्तस्य निरोध एव सततं कार्यः प्रयत्नान्नरैः ॥३२॥

रोगार्तस्य यथैव पथ्यमुदितं तद्वत्स्मृता योगिनो
हेयास्तेऽपि यमास्तथैव नियमास्सेव्याः सदाभ्यासिनः ।
तेभ्यस्स्थैर्यमुपैति कायमतुलं प्रत्याहृतं चेन्द्रियं
ते चाष्टावपि सिद्धयश्च न चिरात्सिध्यन्ति वृद्धस्य वा॥३३॥

आज्ञादित्रितयं शरीरगहने प्राणाभिधानं स्मृतं
भुक्तान्नानि करोति पाकमनिशं स्वप्नाद्यवस्थात्रयम् ।
मूलादित्रितयं तथाऽखिलमलं रेचत्यपानाभिदं
द्वाभ्यामेषु मनोहरं निगदितं द्वाभ्यां च बन्धत्रयम् ॥३४॥

आन्त्राणां कलुषापहं प्रतिदिनं सेवस्व बन्धत्रयं
धातूनां बलवर्धकं प्रतिदिनं सेवस्व बन्धत्रयम् ।
प्राणानां गतिशृंखलं प्रतिदिनं सेवस्व बन्धत्रय
आकाशस्य हि नाशकं प्रतिदिनं सेवस्व बन्धत्रयम् ॥३५॥

पीतो वायुरनाहते यदि शनैर्बद्धस्सुखं रेचितः
ख्यातो मिश्रमकुम्भकः पुनरसौ व्यनस्सुषुम्नेत्यपि ।
आपादाग्रशिरोन्तगात्रविधृतिर्बद्धत्रयं कथ्यते
तस्मिंश्चञ्चलतां जहाति पवनः सिद्धासने चोत्तमे ॥३६॥

प्राणाऽपान-समान-सूक्ष्मगमनां व्यानानिलोच्छ्वासिनीं
ध्यानोद्दीपितदेहकान्तिकलितां प्रज्ञानसौगन्धिनीम् ।
द्वात्रिंशच्छुभदन्तपंक्तिविलसद्दिव्येन्दुबिम्बाननां
ब्रह्मानन्दरसान्तरां शिवमयीं देवीं सुषुम्नां भजे ॥३७॥

तत्सूक्ष्मानिलघट्टिताविमलधीस्सम्प्राप्य सूक्ष्मां दशां
सूक्ष्मांशैस्सकलेन्द्रियैस्वविषयानाप्नोति दूरानपि ।
शैलाग्रस्थमहीरुहस्य मृदुलं मूलं तदीयाश्शिलाः
छिद्रीकृत्य विशत्यखंडतरसा पुष्णाति वृत्तं चिरम् ॥३॥

शान्तादित्यकरा यथा जलधरप्रोता मरुत्वद्धनुः
तद्वद्धीकुहरे करोत्यपि मनस्संसारदुःखोदयम् ।
तन्नीत्वा शनकैः कुलाग्रमकुलं योगाधिरूढस्सदा
ब्रह्मानन्दरसप्रवाहलहरी दोलायमानो भवेत् ॥३९॥

एकं ज्ञानमलं क्रिया न फलदा इत्याह विज्ञानवान्
कर्मैवाखिलमीप्सितं वितरतीत्यन्यः पुनः कर्मठः ।
पक्षौ द्वौ शकुनेरिवोर्ध्वगमने चावश्यके द्वे नृणां
श्रीरामं गुरुराड्वा च विरलं तेनाश्रये त्वामहम् ॥४०॥

दिव्यं नाम धुनोति पापनिचयं सव्यापसव्यं कृतं
तच्चाज्ञा प्रथमाक्षरेण भवति स्वाधारगांत्येन च ।
प्रायस्तच्चतुराननस्य जवनं यानं विहङ्गस्तथा
प्राणः प्राणवतां विभाव्य य इदं जानाति धन्यः खलु॥४१॥

हंसस्त्वं मयि चास्ति मानससरो भूयः पिबन्तत्पयो
दुर्ग्राह्येन्द्रियशुक्तिजैर्नवनवैर्मुक्ताफलैस्तोक्ष्यसि ।
यानं चेत्कमलासनं वह मुदा हृत्कोशमध्यस्थितं
नोड्डीनेन फलं विहायसि गरुच्छक्तिं वृथा मा कुरु॥४२॥

हंसेन्दू तव हंसचारुगरुतावश्रान्तमुड्डीयसे
किन्त्वेकेन गरुद्बलेन सततं द्वाभ्यां विनाऽप्येकदा।
युक्तं रे तव किं नु चित्तवरटां नीत्वापि यास्यान्वहं
नौमि त्वां त्यज मामकीं यदि न चेद्बध्नामि हृत्पञ्जरे॥४३॥

धत्से त्वं शिरशीन्दुमौलिदयिते! शुभ्रांशुखण्डं मुदा
तत्रैवाहमखण्डसोमसुषमां स्वैरं वहाम्यन्वहम्।
मुक्ताहार उमे! तवास्ति न मया मुक्तं ममाहारकं
हेलाशोभितमन्दहंसगमनं श्वासाख्यमेतन्मयि॥४४॥

भेदः किं तव मेच मेचककचे! भण्डासुरोन्मूलिनि!
क्षुद्रेच्छापरिकल्पनैकचतुरोनुन्नस्त्वसौ भण्डिमा।
आलस्यं मम रक्तजं प्रमथितं तद्रक्तबीजस्त्वया
शुक्रप्राणमपीत्थमुद्धृतमुमे! साम्यं समस्तेष्वपि॥४५॥

साम्यं प्राप्तमुमे! त्वया सह मया कार्या सपर्या कया
देयं नो मम सन्निधौ तदधिकं न प्राप्तमम्ब! त्वया।
याचे त्वामधिकं कुरुष्व तनयं मां दानशौण्डं ततो
वाञ्छन्ति प्रसभं पराजयमुमे! पुत्राज्जनाः किं न हि॥४६॥

आज्ञायां भुवनानि पश्यसि तथा स्वप्नानि कण्ठे स्थिता
शेषे त्वं हृदयालये च भवतीं ब्रह्मेति वैज्ञानिनः।
आहुः कुण्डलिनीति योगनिपुणा मायेति केचित्पुनः
केचित्शून्यमिति ब्रुवन्त्यहमपि त्वामेव सर्वेश्वरीम्॥४७॥

सौभाग्यं तव विस्तृतं चिरतरं स्तुत्यर्हमेतच्छिवे
गाढं तं परिरभ्य तिष्ठसि कथं सन्दर्शयात्मेश्वरम्।
याचे नाहमये न किञ्चिदपि तं सम्प्राप्तकामोस्म्यहं
दाता नैव न तस्य चास्ति किमपि स्थाणुस्तथा निर्गुणः॥४८॥

सत्यं वस्तु न दृश्यते नयनयोर्शिशध्वभ्रसन्धेर्वहि
र्याता नौरिव बान्धवास्तु वितथा नौका यथा सम्मुखाः।
व्यत्यस्तीकरणे किमम्ब कुतुकं ज्येष्ठासि मायात्मिके
मां मा मोहय मोहयाम्ब ललिते सन्दर्शयात्मेश्वरम्॥४९॥

रुद्रा मां वहुरोदयन्ति सततं त्वं चासि रुद्रप्रिया
मां मा खेदय खेदयेति सदये प्रब्रूहि तत्सन्निधौ।
गाथाऽप्यस्ति पुरातनी च भुवने त्वं ब्रह्मणश्शक्तिदा-
नाऽऽस्थापीन्द्रपदे ममाऽस्ति भवतामेकं वचस्तद्विना॥५०॥

व्याधेस्सन्ति चिकित्सकास्तु कुशला एकोपि नाधेर्भुवं
तस्मात्त्वां भवभीमतापशमनीं स्वर्गापवर्गप्रदाम् ।
आधिघ्नीं शरणं गतोऽस्मि वद मे वीर्योच्चारं भेषजं
पानं किं किमुभक्षणं जननि भोश्शोचामि तीव्राधिभिः॥५१॥

पूर्वं त्र्यम्बकलोचनोत्थहुतभुग्ज्वालाभिरालिंगित-
श्श्रान्तोप्यद्य सुमायुधः परिजनैर्मां बाधतेऽहर्निशम् ।
क्षुद्रं नाशय लोकतापकममुं शान्तद्विषं शाश्वतं
नोचेत्त्वामपि सायकैरिह शिवे मन्ये स बाधिष्यते ॥५२॥

मातः ! पश्य मनोभवस्य च जनिं तच्चेष्टितं क्रूरतां
जन्माऽभून्मनसस्तदेव सततं मथ्नाति पापाधिकः ।
भुंक्ते प्राणमपीन्द्रियाणि भुवने नृणां सुखव्याजतः
पामान्तर्गतदुष्टकीट इव भोः द्राग्घन्यतां हन्यताम्॥५३॥

नो मे मृत्युभयं न किञ्चिदपि भीर्लोकान्महारौरवात्
शुद्धान्तःकरणस्य धर्मतपसो रत्यन्तविच्छेदकम् ।
सुभ्रूतीक्ष्णकटाक्षसायकधरं क्षुद्रं मतापोन्नतं
क्षुत्तृण्मित्रसमेतकामहतकं स्मृत्वा बिभेम्यम्बिके ॥५४॥

राष्ट्रेऽस्मिन्मम मानसेऽस्ति विपुलो भीष्माऽनलाद्रिःकटु-
र्वीतैर्गान्धिकमूच्छिलासमुदयैः क्रोधानलो जृम्भितैः ।
पार्श्वस्तान्दहति स्वयं च दहते माज्ञासि शान्ति वद
प्रह्वोऽस्म्यम्ब ! दयानिधे कुरु कृपां त्वत्तः शरण्यं न हि ॥५५॥

आशा नाम मदीयसाधु दुहिता कन्यां विदित्वाऽशया
याचन्ते क्रतुभोजिनोऽपि नितरां मे दीयतां दीयताम् ।
नो दत्ता तु मया न ते स्थिरतरास्सम्प्रार्थनीया इति
लब्धां चञ्चलमानसीं त्रिकरणैर्दास्यामि ते पाल्यताम् ॥५६॥

श्रद्धा दारुमये च भक्तिकवचे स्वाधीनहृन्नाविके
सत्वाख्योरुपताकिकाविलसिते स्वाभ्यासयोगप्लवे ।
आसीनस्य ममानुकूलमरुतस्स्वाधीनबन्धस्य मे
मोहोत्तुङ्गतरङ्गभीमपयसो भीतिः कुतश्शाम्भवि ॥५७॥

दुर्गेऽहं कलिदोषकण्टककृते निष्कण्टकः कण्टको
द्वावेतौ मद-मत्सरौ च निरताभ्यासादुपानत्कृतौ ।
दुस्सङ्गद्विपगण्डभित्तिनखकप्रध्वंसदीक्षाक्षमं
दृष्ट्वा मां नृहरिं सदाऽशिवशिवा दूरात्पलायन्ति वै ॥५८॥

शक्तिर्मे कुलकुण्डवन्हिनिलयाधाराच्छनैरुद्गता
स्वाधिष्ठानमणिप्रपूरयुगलं त्यक्त्वा गताऽनाहतम् ।
हंसानन्दरवोत्सुकाऽपि सहसा चाज्ञां स्मरन्ती मुहुः
ग्रीवाकूपविशुद्धपङ्कज रसं पीत्वा यथेष्टं ततः ।।५६।।

मत्ताह्लादितमानसाऽप्रतिहता निर्भिद्यग्रन्थित्रयं
श्रान्ताङ्गी बहु वेपमानचरणा स्विद्यत्कपोलाऽनना ।
घण्टाशङ्खमृदङ्गमेघनिनदा भित्वा कपाटार्गलं
संकेतस्थितवल्लभं भवमहा लिङ्गं समालिङ्गिते ।।६०।।

यो धर्मः कथितः पुराणपुरुषैर्जातानुसारश्शुभ-
स्तद्धर्मानुगुणक्रियैकनियमास्संसेव्य वृद्धान्पुनः ।
स्वेच्छाकल्पितमालया च मनसा वोपांशुवादेवतां
ध्यायन्तः क्रमशोऽपि वीतगुणका निर्यान्ति विष्णोःपदम्।।६१।।

रूपं ते सकलेन्द्रियैश्च मनसाऽप्यग्राह्यमित्युच्यते
नामानि प्रथयन्ति तानि शतधास्थानानि भिन्नान्यपि ।
किं कार्यं वद साम्प्रतं जडधिया ज्ञातुं तवेदं मया
देहि त्वं निजदर्शनं निजसुतं मां पाहि विश्वेश्वरि ।।६२।।

मन्युः कारणमेनसामिति यजुर्मन्त्रैश्च घुष्टं पुरा
मूढैर्नो विदितं यथैव शलभा दीपे दहन्त्यात्मनः।
शान्तास्तस्य जयाय घोरविपिनं गत्वा सतीं चात्मजान्
त्यक्त्वा तीव्रतपश्चरन्ति किमहो किं मे गतिः पावनि॥६३॥

गायत्रीं ललनेत्यनूध्वविरलं मुक्तादिवर्णाननां
भिन्नं तत्सवितुर्वरेण्यमसकृच्चोजः परं धीमहि।
या माया त्रिगुणात्मिका सहचरी या ब्रह्मणः पेटिका
सैवाऽस्मानपि मोहयेदिति नुमः कण्ठान्तचक्राननाम्॥६४॥

भोः सौम्याः पुरुषोत्तमाः कथमिमां विस्मृत्य जीवन्ति भोः!
को भेदः पशुपक्षिणां च भवतां धर्मं यदि त्यक्तथ।
विश्वासः कथमत्र वः पुनरिदं लप्स्यामहे मानवं
जन्मैतद्बहुदुर्लभं न सुकृतैराप्यं विना प्राणिनाम्॥६५॥

एकालम्बनमानसाः पुनरिदं धिग्मानवं दुस्तरं
ह्यावर्तं प्रविशन्ति नास्त्यपचितिस्ताभ्यामुभाभ्यां विना।
एषामेकमपीह नास्त्यसकृदावृत्या म्रियन्तीति तान्
छन्दोगास्ससततं ब्रुवन्ति किमहो न ज्ञातमज्ञैरिदम्॥६६॥

विज्ञानं श्रवणेन वै विविदिषोः सञ्जायते नोऽधिकं
जिज्ञास्यं स्वयमेव तत्तु मननैर्यद्यद्गुरुभ्यश्श्रुतम् ।
अभ्यासेन घनान्तरायतुहिनं विद्राव्य योगाग्निना
निर्बीजेन समाधिना तदुदितं प्राप्नोति नावर्तते ॥६७॥

द्वैतं तत्तदुपासनं हि सततं चाऽहं ग्रहेऽस्त्यस्मिता
सम्प्रज्ञातमिदं विकल्पसहितं मिश्रं च तात्कालिकम् ।
प्राणे चास्तमिते न किञ्चिदपि तद् ब्रह्मैव न ब्रह्मवित्
ध्यानादित्रितयं च नास्ति हि तदा मायाऽभवत्सामया॥६८॥

प्राणा यस्य समुद्गतास्तु गगनं सूक्ष्मं शरीरं गतं
तस्य स्यात्पुनरेव जन्म धनिनां गेहे शुचीनां पुनः ।
यस्यैतद्विलयं गतं हि पवनं मुक्तो विदेही भवेत्
छिन्नोप्यत्र न कम्पते हि जडवल्लीनो भवेद्ब्रह्मणि ॥६९॥

निष्कामा विजितेन्द्रियास्सुकृतिनश्चात्मैककामास्सदा
ब्रह्मीभूय भवन्ति शुष्कतृणवत्संन्यस्य राज्यादिकम् ।
एकेनैव हि वाञ्छितेन सततं दूये न मेऽन्यच्छिवे !
सूक्ष्मं देहि ममावकाशमधुना पश्यामि जीवेश्वरम् ॥७०॥

कष्टं नैव हि वेदशास्त्रपठनं तत्त्वोपदेशः परान्
शिष्टाचारविधिं विहाय पशुवद्गात्रस्य वा पोषणम्।
कष्टात्कष्टतरं यमादिसहितप्राणानिलाराधनं
दृष्टे नष्टमतिस्तथा न हि कलौ पुण्यैर्विना लभ्यते ॥७१॥

तद्विष्णो हृदयं त्वदीयमभवद्गेहं पुराचञ्चले
देहार्धेन च तावकेन घटितं पश्चाच्छिवस्यैव हि।
किं चै तत्सकलं तिरोहितमभूद्ब्रह्माणि तद्ब्रह्मणः
सूक्ष्मं देहि ममावकाशमधुना पश्यामि जीवेश्वरम् ॥७२॥

धावन्त्यम्ब पराङ्मुखान्यणुमयैस्सर्वेन्द्रियाण्याशुगैः
प्रत्याहारविधौ न चास्मिकुशलो ध्यानं कथं धारणा।
प्रत्यावर्तय कातरोऽस्मि सकलां जानामि ते चातुरीं
त्वं वै चित्रविचित्रनाटकनटी त्वं वै जगन्मोहिनी ॥७३॥

त्रिंशद्वत्सरशिक्षितान्यपि कथं सर्वेन्द्रियाण्युत्सुकात्
ध्यानोन्मुक्तमहारया इव शिवे शब्दाहताः पक्षिणः।
धावन्त्येव हि पञ्चविंशतिगणं श्रान्तोऽस्मि नो मे सखा
प्रह्वोस्म्यम्ब ! निधेहि तानि कुशलं त्वत्पादुकापञ्जरे॥७४॥

कष्टं नैव करांगुलीषु गणनं रुद्राक्षमालासु वा
कष्टं स्वाक्षरमालिकासु गणनं सृष्ट्यादिकैस्तैः क्रमैः ।
नो चेच्चित्तविहारमूर्तिविलसद्दिव्याङ्गमालासु वा
हस्ताभ्यां गमनं यथा न सुकरं तीव्रप्रयत्नाद्विना ॥७५॥

मालां त्वल्ललिताङ्गकैर्विरचितां स्वीकृत्य त्रिंशत्समा-
श्शुद्धा पञ्चदशी मयैव जपिता कोट्यर्धमुत्कण्ठया ।
तृप्तिर्नास्ति पथाकुलेन ललिते त्वं ब्रह्मणश्शक्तिदा
शक्तिं मे समये च देहि भुवनं नो चेदशक्तं भवेत् ॥७६॥

धर्मोपार्जितहेमरत्नघटितप्राकारमध्ये वसन्
यावज्जन्म सुखं नयामि दिवसान् त्वन्मन्त्रदीक्षापरः ।
जिह्वोपस्थकपाटकौ तु शिथिलौ द्वे तत्र संस्थापितौ
द्वारं शत्रुसमाश्रितं च ललिते शान्तिः कथं शाम्भवि !॥७७॥

विज्ञानं नैव साध्यं श्रुतिकटुकलहैश्शुष्कवेदान्ततर्कैः
विज्ञानं नैव साध्यं ह्यनशननियमैः पुण्यतीर्थाटनैर्वा ।
विज्ञानं नैव साध्यं युवतिसुतगृहक्षेत्रहर्म्यादिकैर्वा
त्यागेनैकेन साध्यं शमदमसहितानन्यभक्त्याक्रमेण॥७८॥

एकस्यैवेन्द्रियस्यप्रियमिति गदितं मिष्टमन्नं तदुक्तं
द्वित्राणां वा चतुर्णां सुखकरममितं मोदकं तद्धनं हि।
सर्वेषामिन्द्रियाणां प्रियतमयुवती सङ्गमन्तत्प्रमोदं
ब्रह्मानन्दं त्रिरुद्धं त्वविदितविषयं शाश्वतं चात्तदूरम्॥७६॥

सत्यज्ञानसुखात्मकं हि भुवने ब्रह्मत्रिधा भासते
सत्येनैव शिलादिषु स्फुरति वै द्वाभ्यां च धीवृत्तिषु।
आनन्देन कदाचिदेव सुनिहृद्ज्ञेयो न सार्वत्रिकः
सत्यं नित्यमबाधितं तु सकलाश्चित्रास्सदा मायिकाः॥८०॥

यत्रैनां परिगृह्य तिष्ठति सुखं कुड्यादिकं स्याज्जडं
यत्रैषा स्फुरति स्फुटं बहुविधं तच्चेतनं कीर्त्यते।
किञ्चित्कालमियं तु चेतनदशा दृश्या न सर्वेष्वपि
ज्ञेयं ब्रह्मनिरामयं तु सकलाश्चित्रास्सदा मायिकाः॥८१॥

शुक्रं नास्ति हि चेतनं तदपरं प्रेतश्च नो चेतनं
विष्ठायामपि कीटकादिजननं विद्युच्च मेघोदरे।
पश्यैतत्क्वचिदेव चेतनदशां प्राप्नोति नो सर्वदा
सत्यं नित्यमबाधितं तु सकलाश्चित्रास्सदा मायिकाः॥८२॥

सत्यं वस्त्विह चेतनायितमहो सा सा जगद्बृंहिका
सत्यं सत्यवदेव तिष्ठति यदा हर्म्यादिकं स्याज्जडम् ।
सत्ये ज्ञानलयात्प्रशान्तमनसश्चानन्दभावोदयं
सत्यं नित्यमबाधितं तु सकलाश्चित्रास्सदा भंगुराः॥८३॥

सत्यं सत्यं त्रिकालं वियदिव सकलं भाति तत्प्रोतमोतं
स्वान्तस्थं चाऽतिदूरं महदपि महतां चाणुरेवेह्यणूनाम् ।
विज्ञानं ब्रह्मजन्यं भवसुखजलधेर्दाहकं नैव दाह्यं
प्रज्ञानं ब्रह्मसाक्षाद्विदितमविदितं नैव तत्राऽस्ति किञ्चित्॥८४॥

सत्यस्यैव विवर्त एव खमभूत्प्राणोऽग्निरापोऽवनिः
सत्यस्यैव विलासमेव सकलं विश्वं विवर्तायितम् ।
स्यादेवं क्वचिदेव किञ्चिदसतस्सञ्जायते लीयते
मायायाः परिणामशीलमितरद्योनौ विवर्तायते ॥८५॥

सत्यं सत्यवदेव तिष्ठति यदा तद्वै विवर्तं जगु·
स्तन्मायापरिणामशीलमितरच्चित्रं सदा भंगुरम् ।
भूमेर्हर्म्यघटादिवच्च वियतः पृथ्वीं विवर्तं जगुः
तद्भूमेः परिणामशीलमधुरा वृक्षा लता जङ्गमाः ॥८६॥

सत्यं सर्वं विवर्तं परिणतमखिलं चेष्टितं तत्प्रकृत्या
भूतान्येतानि सत्यं तदुदितमखिलं बुद्बुदाभं विचित्रम् ।
यस्माद्यावद्विभिन्नं भवति खमनिलोद्भिज्य पश्वादिरूपं
तद्योनौ लीयते वै परिणमितभवा यान्ति सत्ये विवर्तम् ८७

केदारेषु यथैव कर्षकजनस्सस्याभिवृध्यै सदा
तद्भिन्नं तृणसन्ततिं परिसरान्निष्कास्य पुष्णाति वै ।
तद्वच्चित्तविशालघोरविपिनप्रोल्लासि नानाङ्कुरं
नित्यानित्यविवेकविह्वलमना निर्मूलयन्नास्यते ॥८८॥

एकं दर्पणमग्रतस्तु विमलं पश्चाद्द्वितीयं पुनः
संस्थाप्याऽत्र भवेज्जनो यदि भवेन्मध्ये तयोः पश्यति ।
विम्बानां प्रतिबिम्बितानि शतधा लोके स्वकीयानि वै
तद्वद्धीमनसोश्च मध्यमगतो जीवोप्यनन्ताकृतीः ॥८६॥

ज्ञानी बुद्धिमपास्य लौकिकसुखं विज्ञाय दुःखाकुलं
बालोन्मत्त इवाऽवनौ भ्रमति वै जीवन्स मुक्तो भवेत् ।
ब्रह्मैवाहमिति प्रशान्तमनसा विस्मृत्य स्वीयं तनुं
तिष्ठासेद्धिविदेहवानुपलवद्ब्रह्मैव सन्ब्रह्मणि ॥६०॥

न यज्ञं नोदानं न हि पवनसंस्तम्भनविधिः
न मन्त्रं नो यन्त्रं करणकरणीयं तदपि नो ।
सदा हृत्पद्मान्तर्गतदहरसञ्जातंपवनं—
हृदा पश्यन्नास्ते कथमिह स योगी कथमहो ॥६१॥

अहं ब्रह्मैवाहं गतमतिरहं कर्मरहित
स्त्वहं शुद्धो बुद्धश्शशिरविमुखा भूतनिवहः ।
अहं शान्तस्वान्तः कलिदुरिततूलाद्रिदहन—
स्त्वहं नित्यस्सत्यस्त्वहमहमहं चित्सुखमहम् ॥६२॥

अहो चित्रं रूपं भवति हि वपुर्नास्ति चलनं
अहो दिव्यं रूपं वदति न हि भुङ्क्ते श्वसति वा ।
कथं ज्ञेयं रूपं भवति जगदानन्दजनकं
कथं प्राप्यं रूपं दहरकुहरोद्भूतमनसः ॥ ६३ ॥

किन्त्वेतत्कमलं वदन्ति निलयं विष्णोः प्रियायाश्शुभं
किन्त्वेतच्चतुराननः कमलभूर्जातोहृदम्भोरुहात् ।
किं तद्विष्णुपदं प्रमेयरहितं हृत्कोशमध्यस्थितं
किंचिन्नान्यदिति स्मरामि ललिते सर्वं तदाध्यात्मिकम् ॥६४॥

विष्णुश्शेते भुजंगे न हि किमुवलयास्तान्कपर्दी विभर्ति
स्थाणोर्लिङ्गं तथैव स्मरहरसदने मेखला चास्यसूनोः।
धात्रीभारं विधत्ते हरिरिति यदिदं भोगिरूपं जगत्यां
मूलाधारस्थशक्तिः परशिववनिता सैव सा सार्धनारी।६५।

आनन्दान्मानवानां दशशतगुणितश्शाश्वतोब्रह्मणोत्थः
तंत्वानन्दंविसृष्ट्वा क्षपयसि किमु रे दुर्मते कालमन्यैः।
तुच्छैस्तैरिन्द्रियार्थैः क्षणमपि न हि ते शर्मतद्भ्रान्तिरेव
श्रुत्वा मद्वाक्यमस्माद्व्रज भज सततं चित्कलां शर्मदात्रीम्।६६।

जीवस्य ब्रह्मणो वा प्रकृतिपुरुषयोर्ना रमप्यन्तरन्त-
द्ब्रह्मैवेदं विवर्तं जगदिव सलिलाद्भाति तुङ्गोर्मिजालम्।
तस्यैषा स्पन्दशक्तिः प्रथितगुणमयी चेष्टते तेन साकं
भेत्तुं शक्या न तस्मात्सुरभिरिव सुमादेकमेवाद्वितीयम् ६७।

धन्योऽहं कृतकृत्य एव ललिते वाञ्छा न मे लौकिकी
याचे त्वामधुना भवेद्यदि जनु द्वीपे स्तुते सन्निधौ
वेदान्तश्रवणे नमेऽस्ति धिषणा योगे न मन्त्रेपुन
स्त्वामेवानुसरन्तु मामकमनो बुध्यादयस्सात्त्विकाः॥६८॥

एतच्छब्दमयस्य तावकमणिद्वीपस्य सङ्कीर्तने
संक्रान्तं मम जीवितं तदधिकं कर्तुं क्षमो नास्म्यहम् ।
तेन त्वां मम भावि जन्मसु पुनस्तस्यापि निर्मापकः
स्यामित्येव मतिर्विचिन्तयति मे याचे तदङ्गीकुरु ॥९९॥

शृण्वन्नित्यमिदं व्यपोह्य दुरितं नीचोऽपि पूतात्मना
ध्यायन्तत्पदपङ्कजे प्रतिदिनं श्रेयः पदं चार्च्छति
आहेत्थं कुशलस्त्रिलिङ्गमनुजः कौण्डिन्यगोत्रोद्भवः
श्रीमाञ्जम्मलमडूकवंशतिलकश्श्रीसूर्यनारायणः ॥१००॥

यावद्ग्रन्थमिमं भूम्यां पठेयुर्विबुधा नराः ।
तावत्तस्माच्छिवं मे स्यादिति मत्वा प्रकाशितम् ॥१०१॥

इति मणिद्वीपे तृतीयोऽध्यायः ।

मणिद्वीपः समाप्तः ।





# श्रीमत्पञ्चदशीस्तोत्रम् ।



कल्याणामृतवर्षिणीं कुलपथध्वान्तैकसञ्चारिणीं
कल्याणाम्बुनिधिं कलाविलसितां कन्दर्पसञ्जीविनीम् ।
कर्मारण्यविहारिणीं कुवलयावासां क्रतुध्वंसिनीं
कान्तां कर्मफलप्रदां हृदि सदा ध्यायामि कामेश्वरीम् ॥१॥

एकामेकरसां तरङ्गकलितां तामेधमानां शिवा-
मेकान्ताध्वरवेदिकाहुतभुजामेकान्तसञ्चारिणीम् ।
एतत्तद्बहुभेदबुद्धिजननीमेकातपत्रोज्ज्वला-
मेलालाञ्छितवीटिकाञ्चितमुखीमेकाररूपां भजे ॥२॥

ईशालिङ्गनविह्वलाङ्गलतिकामीशत्वसन्धायिनी-
मीषद्रक्तविशालनेत्रयुगलामीशानसीमन्तिनीम् ।
ईशानादिसुरेन्द्रवन्दितपदामीशान्नमामीश्वरी-
मीच्चित्रीमहमीडितां पुनरिमा मीडे जगद्दृंहिकाम् ॥३॥

लब्धब्रह्मपदां ललाटनयनां लावण्यपाथोनिधिं
लब्धेशानमृदूरुयुग्मशयनां लम्बोदराम्बां सदा ।
लाक्षालांछितपादपद्मयुगलां लज्जाऽनताब्जाननां
लोलाक्षीं ललनां स्मरामि ललितां सिद्धिर्भवेल्लाघवी ॥४॥

ह्रींकारानलदग्धपापनिवहे ह्रींकारपद्मालये
ह्रींकारैकजपानुमोदवरदे ह्रींकारबीजाभिधे ।
ह्रींकाराच्छसुजातमौक्तिकमणे ह्रींकारसौदामिनि !
ह्रींकाराम्बुजभृङ्गिके नतिरियं ह्रीं ह्रीं नमो ह्री नमः ॥५॥

हंसे हंसरथाधिरूढगमने हर्यक्षयानप्रिये
हस्त्यश्वादिपदातिकाविलसिते हंसाग्निसोमेक्षणे !
हाहाकारकृदुग्रराक्षसगणे हत्यादिपापापहे
वन्दे त्वां हरिणेक्षणे हरनुते हानिर्न मे जातु हे ॥६॥

सारासारविचक्षणे सहृदये सर्वेश्वरालिङ्गिते
सानन्दे सकलार्थदायिनि सुधाधाराभिवर्षप्रदे ।
संसारार्णवतारणैकचतुरे सङ्गीतलोलोद्यमे
सर्वोत्कृष्टपदप्रदाननिपुणे त्वां नौमि सिद्धेश्वरि ॥७॥

कञ्जातायतलोचने कविकुलत्राणे क्वणत्कङ्कणे
काव्यालापविनोदभासुरमुखे कान्तार्धदेहाश्रिते !
कोपाटोपविदग्धशत्रुनिवहे कान्तामणे क्लींनुते
धन्यस्त्वां समुपैति हृष्टमनसा कं खं नमः क्रों नमः ॥८॥

हेरम्बप्रसवित्रि हाटकनिभे हृष्टान्तरङ्गे नमो
हेलालाञ्छितमन्दहंसगमने हुंहुंकृतानीकिनि ।
हस्तन्यस्तसमस्तलोकनिवहे हस्ताम्बुजाऽब्जे नमो
हाहावीजितचामरे हततृषे होराननने ते नमः ॥ ९ ॥

लीलामानुषविग्रहां लघुतरां लम्बोदराह्लादितां
लाभालाभविवर्जितां लयकरीं लक्ष्मीं लसत्पद्मिनीम् ।
लोलेन्दीवरलाञ्छितां लवमनूद्दिष्टार्थकूटत्रयीं
लब्धैश्वर्यसमुन्नतिं हृदि सदा वन्दे जगच्चन्द्रिकाम्॥१०॥

ह्रींकाराद्रिगुहप्रचण्डनिनदत्कंठीरवे ह्रीं नमो
ह्रींकारेभ समूहकेलिकुतुके ह्रींकारचिंतामणे ।
ह्रींकाराक्षरवन्दिवन्दितपदे ह्रींकारचिंतापरे
ह्रींकारप्रसवित्रि नौमि सततं ह्रीं ह्रीं नमो ह्रीं नमः ॥११॥

सर्वज्ञे सकलेष्टदे सुरुचिरे सर्वात्मिके सर्वगे
सर्वानन्दकरे समस्तजगदुत्पत्त्यादिदत्ते नमः ।
स्वाध्यायप्रतिभे सुमङ्गलकरे सौन्दर्यरत्नाकरे
त्यक्त्वाऽन्यान्शरणं गतोऽस्मि न सहे मां पाहि तापत्रयात् ॥१२॥

कंसध्वंसकरीं कृतान्तशमनीं काकासुरान्मूलिनीं
कन्दर्पाऽनलदर्पहां क्रतुनिभां कामेशहृद्भृङ्गिकाम् ।
कल्लोलाऽमृतसागरैकनिलयां कुन्दप्रसूनप्रभां
कालीं कामकलां प्रहृष्टमनसा त्वामर्चयाम्युत्सुखः ॥१३॥

लक्ष्यां लक्षणलक्षिताङ्गलतिकां लब्धाकृतिं भावये
लङ्कानायकनाशहेतुजननीं लब्धान्तिं चिन्तये ।
लीलालालसकामिनीजनतुतां लोलेक्षणां लालये
लिङ्गालिङ्गनतत्परां लिपिमुखीं लास्यप्रियामाश्रये ॥१४॥

ह्रींकारेन्दुकलावतंसरुचिरां ह्रींकारनादोत्सुकां
ह्रींकाराम्बरभास्वदर्कविमलां ह्रींकारभूभृन्निभाम् ।
ह्रींकारद्रुमकोटरान्तरशुकीं ह्रींकारकन्दाङ्कुरां
ह्रींकारादिसमस्तमन्त्रजननीं ह्रीं ह्रीं नमो ह्रीं नमः ॥१५॥

श्रीमन्त्राक्षरमालिकास्तवमिमं यो वा पठत्यन्वहं
तद्गेहे त्रिगुणात्मिका शिवतमा लक्ष्मी वसत्यादरात् ।
जिह्वाग्रे च सरस्वती हृदि पुनस्सर्वेश्वरी चित्सुखी
तद्गोत्रं सुखमेधते सुयशसाप्याचन्द्रतारागणम् ॥१६॥

इति पञ्चदशीस्तोत्रं समाप्तम् ।



# कामदहनस्तोत्रम् ।



शम्भो ! त्वं चतुराननोऽसि जगतां प्राणोऽसि भूताऽधिपो !
व्यानस्त्वं कुलपालकस्मरहरो जीवेष्वपानाऽभिदः ।
त्वद्रूपं प्रणवात्मकं शिवकरं सेवे शिवं देहि मे
नोचेत्त्वच्छिवनामकं शिवकरं व्यर्थं यशस्स्याद्ध्रुवम् ॥१॥

शम्भो ! तावकलोचनाऽनलशिखादग्धस्स्मरःपामरः
सञ्जातः पुनरप्यनूनबलवान्वीरोऽभवत्तामसः ।
व्यर्थं वीर्यमहो ! तवैव शृणु मे स्निग्धं वचस्साम्प्रतं
मूलं तस्य मनस्तदेव हर नो जायेत लोके पुनः ॥ २ ॥

शम्भो ! पन्नगभूषणोऽसि गिलितं तत्कालकूटं पुरा
बाधन्ते विषयेन्द्रिया विषधरा धर्तुं समर्थो न हि ।
तस्मात्तान्सकलान्ददामि कृपया स्वीकृत्य दुश्चेष्टितान्
धन्यं मां कुरु देवदेव ! करुणासिन्धो ! नमस्ते नमः ॥३॥

ऐश्वर्यं तव सेवकास्तु रुचिरं नूनं लभन्ते प्रभो !
किं भिक्षाशनमीश्वरस्य तव ही युक्तं न मृत्युञ्जय ?
मद्दत्तं परमामृतं हिमकरस्रस्तं यथेष्टं पिबन्
पार्वत्या गणनायकप्रभृतिभिर्मद्ध्येत्र वासं कुरु ॥४॥

किं ते मूर्ध्नि जटाकलाप उरगाः कण्ठे किमङ्गेष्वहो ?
किं तद्भस्मकपालभोजनमिदं किं ते दिगेवाम्बरम् ।
आज्ञातं विचिनोषि कुण्डलधरां भार्यां मदोन्मादित-
स्सा शेते हृदयालये कुलसती तुभ्यं ददाम्येहि माम् ॥५॥

मातङ्गी तव सुन्दरी कथमहो ? लिङ्गाकृतिस्ते वपुः
पुत्रः किं नु गजाननस्सुखतमा शय्यापरेतस्तलम् ।
तत्राप्युन्नतसार्वभौमपदवीं प्राप्नोषि विश्वेश्वर ?
ज्ञेयं नो महिमा सुराऽसुरगणैर्वन्दे पदं ते मुदा ॥६॥

कैलासाद्रिविचित्रचित्रितमणिप्रासादमध्यस्थित-
स्फूर्जद्धाटकरत्नमौक्तिकलसच्छय्याधिरूढां शिवां ।
गायन्तीषु सुराङ्गनासु मधुरं नृत्तं कृतं यत्त्वया
तेन स्त्रीगणलालसस्त्वमधुना मारप्रियश्शङ्कर ? ॥७॥

यद्दत्ताध्वरवञ्चनाऽनलहता प्राणप्रिया सुन्दरी
यत्तद्भस्म निधाय मूर्ध्नि विरहाद्भ्रान्तोऽसि सर्वा दिशः ।
यत्प्राप्त्यै कृतवान्तपश्च विपिने घोरं समाश्शाश्वतीः
तेन त्वं स्मरवञ्चितस्त्वमधुना नो वञ्चकस्त्र्यम्बक ! ॥८॥

शक्तिश्चेत्तव भीम ! कामहतकं निर्मूलय क्षोभणं
भीमश्चेज्जहितुच्छकामहतकं लोकस्य संक्षोभणम् ।
रुद्रश्चेद्धनतुच्छकामहतकं शान्तस्य विद्वेषणं
शूलं चेद्घनमस्ति कामहतकं नामावशेषं कुरु ॥९॥

किं कष्टं सुमसायकस्य हननं पञ्चैव तस्येषवः
किं कष्टं विजितस्य चेक्षुधनुषो निर्वासयारात्खलम् ।
किं कष्टं शुकसैनिका विशसनं भीमं पुनर्दर्शय
द्रां द्रां द्रावय नीचकामहतकं प्रेतालयं प्रापय ॥१०॥

धिग्जाल्मनूचपलात्मकस्मरसदा गूढं त्यजस्याशुगान्
किं तद्युद्धमरे ! पुमानसि यदि द्रागेहि मे सम्मुखम् ।
नाराचान्न विभेमि पेलवतरान् बाह्वोर्बलं दर्शय
क्लीवो नाऽस्मि करोमि बाहुसमरं भीमो ! हमेह्येहि माम् ॥११॥

इति कामदहनस्तोत्रं समाप्तम् ।

# सम्मतयः ।

परिडत जे० सूर्यनारायणशास्त्री सुपरिचितोऽस्माकम् । अनेन निसर्गकविना प्रणीतं मणिद्वीपाख्यम्, आध्यात्मिकं सरसं गम्भीरार्थकं सुललितं गीर्वाणवाणीमयं काव्यं विलोक्य वयं महान्तं परितोषमवापुः । ज्योतिःशास्त्रीयफलितविभागे चास्य पारिडत्यमवलोक्य विस्मितासुखिताः संवृत्ताः । अनेन प्रणीतं फलितग्रन्थं च समवलोक्य महती प्रीतिरस्माभिर्लब्धा । अयं धार्मिकःसुशीलः सम्यगुपासनारतः सर्वथा सद्भिस्समर्थैः समुत्साहनीय एवेति विज्ञापयति—

*Ex Principal*

*and.*

*Director Of Sanskrit Study,*

*Benares Hindu University.*

६–५–३६ }
बनारस }

महामहोपाध्यायः प्रमथनाथ-
तर्कभूषणशर्मा ।

साङ्गवेदीयविद्यालयम् ।

## श्रीविश्वेश्वरश्शरणम् ।

मणिद्वीपं योगमार्गं तथा खेटकदर्शनम् ।
त्रयीं निर्मितवान् श्रीमान् सूर्यनारायणप्रधीः ॥

मणिद्वीपे देवी विबुधवता संस्तुतवता ।
प्रसन्ना शर्वाणी ललितपदवाणी विरचिता ॥
तथा योगे मार्गं सयमनियमा दर्शितवता ।
ततः खेटानां च प्रकटितमहो दर्शनमपि ॥
गीर्वाणवाग्वर्धिनीयं सभाग्रन्थैः भवत्कृतैः ।
नृणां सम्भाव्योपकृतिं साधुवादान्प्रयच्छति ॥

हरिरामशुक्ल, मन्त्री । चैत्र शु० १

गणेशदीक्षितः—सभापतिः
गोपालभट्टभट्टः
नीलकण्ठशास्त्री
राजेश्वरशास्त्री

अद्य खलु श्री जे० सूर्यनारायणशर्मवर्याः श्रीमणिद्वीपवर्णनद्वारा श्रीमत्परां भट्टारिकां परमेश्वरीमाराध्य स्वयं तीर्त्वा परांस्तारयितुकामाः मणिद्वीपवर्णनात्मिकां स्तुतिमतल्लिका समचीकरन् सा चेयं स्तुतिः मृदुपदबद्धा अर्थगाम्भीर्ययुक्ता पठन-श्रवण-मननादिना भक्तान् पुरुषार्थेषु प्रवर्तयन्ती परमेश्वरीं प्रीणयति तस्मादुपादेयमेव मणिद्वीपवर्णनम् ।

रु० रामशास्त्री,
*Pandit Sanskrit College*
*Vizianagaram.*

३०-३-३९

श्रीमान् पण्डितवरो सूर्यनारायणशास्त्री महोदयः वेदमार्गनिष्णातोऽपि तन्त्रशास्त्रे परां परिचितिमुपगतः । भगवत्याः पर-

देव्याः परमप्रसादलब्धकविताशक्तिकः स्वीयं तदनुग्रहैकलब्धं ज्ञानं सरलैरेव पद्यैर्लोकहितार्थमेव वहिः प्रकाशयन् योगमार्गादिग्रन्थरचनद्वारा योगानुष्ठानस्याऽपि सरलतां गृहस्थानुष्ठेयतां च समुपपादयन् सर्वथा श्लाघनीयपरिश्रमः तत्तन्मार्गप्रविविक्षूणां निरतिशयमुपकारमादधातीति नितरां सन्तुष्यति हृदयं मामकीनम्।

अतस्सर्वेश्वरं भगवन्तं विश्वनाथं प्रार्थये निःस्वार्थभावेन लोकहितैकबुद्ध्या एतादृशकार्ये प्रवृत्तं विद्वद्वरेण्यमिमं शतायुः प्रदानेन कार्यस्यास्य समुचितसाफल्यप्रदानेन चानुगृह्णात्विति–

वनारस<br>२१-१-३९

चिन्नस्वामिशास्त्री–<br>( पूर्वमामांसोपाध्यायः )<br>*Benares Hindu University.*

वेदतन्त्रोभयज्ञानशिक्षिता वहवो जनाः।<br>कलावस्मिन्न दृश्यन्ते प्रायेणाऽयं कविर्यथा॥

श्रीकण्ठशास्त्री।

२१-१२-३८<br>वनारस

*Head pandit. Nangangud. Mysore*

दैवी शक्तिस्तु ग्रन्थेषु सर्वेषु परिदृश्यते।

इति पूर्णानन्दसरस्वती।

३०-१२-३८ बनारस।

श्रीमान् सूर्यनारायणशास्त्री वेदशास्त्रयोस्तन्त्रे च अधीती सारवेत्ता च मणिद्वीपाख्यग्रन्थस्य रचयिता च अयं ग्रन्थो

मया व्यलोकि । सुपद्यमणिभिर्नितरां प्रद्योतमानो मणिद्वीप आनन्द-जनको विबुधानामितरेषां च । कलावस्मिन्नेतादृशः कविर्विरलतर-इति शम्—

बनारस
१६-१-३६

प्र० सीतारामशास्त्री
*Manager.*
शृंगेरीमठ

अस्मिन् सांख्ययोगादिदर्शनविषयाश्च भूयसा दृश्यन्ते तादृशानां विषयाणां लोकानुगुण्येन सन्निवेशदर्शनात्काव्यनिर्मितहेतुभूतलो-कशास्त्रकाव्याद्यवेक्षणादिकमतिनिपुणमुन्नेतुं शक्यते ।

१२-३-३१
*Sanskrit College.*

नौ० वेङ्कटशास्त्री.
*pandit and Pleader.*
*Vizianagaram*

सरलमृदुलभणितिरस्य कवेः सर्वत्र अस्मिन्काव्ये परिस्फुरति मन्त्रशास्त्रप्रतिपादितानि बहूनि श्रीविद्यारहस्यानि न वेदान्तार्थविरु-द्धानीति समर्थयितुं कृतप्रयासोऽयं कविः ।

आ० सांख्यायनशर्मा,
१०-३-३५
महोपाध्यायः
*Pleader parvatipuram.*

अभ्यर्हिता एव विषयास्सर्वत्र दृश्यन्ते

मु० नरसिंहाचार्य स्वामी ।
*Pandit Of Visianagaram*
*Samsthanam.*

अस्मदत्यन्तप्रियशिष्यस्य काकिनाडाऽग्रहाराऽभिजनस्य जम्मलमडकवंशमुक्तामणेः श्रीसूर्यनारायणशर्मणः सर्वाभीष्टार्थसिध्यै क्रियते नारायणस्मृतिः। श्रीमद्देवीचरणभक्तिभरनिवेदकं, भवद्भिरचितं-मणिद्वीपाख्यं देव्युपासनासहकारिग्रन्थरत्नम् अस्मत्सविधे भवदुपहृतं, भव मुखात् श्रुत्वा भवतः परदेवतापदकमलनिरन्तरतप्रमानसतां सुदृढनिष्ठागरीयस्त्वं चावगत्य नितरां सन्तुष्यामः।

श्रीवेंकटाचल
तिरुपतिक्षेत्रात्

श्रीकामकोठिपीठाधिपतिः
श्रीमच्चन्द्रशेखरेन्द्रसरस्वती श्रीपादैः—

I have heard Parts of MANIDWEEPA read out to me by the author,whom I also have to speak about. The subject is incomparable in its hight as also perhaps the love of the High in the writer.The treatment is lucid and lovily. That the mystic subject has been relieved of the monotany of the abscurity it has been enjoying by the popular treatment given it by the author, speaks volumes of his fine grasp of the high conventions of Agama and the practical love he bears the subject in the form of personal practice of the Adwaitic ideals which the Agama is designed to bear

out. A close study of the book will elivate the reader in no small measure.

Lalitanagr.
*Waltair*,
24 May 1933

*J. MANGIAH*,
"Dharma Bhaskar"
Ex. Principal, Nizam College.
DUCCAN.

I heard portions of the work Manidwipam kindly read out to me by the author Brahmasri Jammalamadaka Suryanarayana Sastriar.

The story is taken from the Devi Bhagavatam and the author has given it a new & interesting setting. The similes adopted by him are apt and taken from mordern sciences. The author is to be congratulated in expounding high Philosophical truths in such flowing and easy verse. I have no doubt that the book deserves the careful perusal of all interested in Indian Philosophy.

Vizianagram.
30-6-1931.

(Sd.) P. V. Ramanuja Swami, M.A.,
*Principal*,
: Mharajah's Sanskrit College.

I have read with great interest the work entitled "Manidwipa" written in verse by my friend Brahmasri

Jammalmadaka Suryanarayana sastriar, Though an Engineer by profession, he is a sound and good Sanskrit scholar. He has aknowledge of yoga and Mantra sastras which is not ordinarily found. Like the eminent poet Lord Tennyson he attempted to give a poetic expression to current scientific ideas and his success in putting flowing and melliflous verse, abstruse philosophic and scientific truths is noticeable. In these days when Hindus do neither find time nor have desire to study Sanskrit, it is rare to find a scholar poet of his attainments. He deserves the heartiest congratulations of all interested io Sanskrit studies, for writing this charming work "Manidwipa"

Vizianagram. 3—4—1931 } [Sd.] K. Rangachari, M. A. B. L.
Prof. Maharajah's College
&
Member of the Senate, Academic Council, Andhra University. & Municipal Chairman,

"MANIDWIPA" by M. R. Rv. J. Suryanarayanagaru is an allegorical poem in Sanscrit, setting forth the need of Practical worship and not mere theoretic knowledge of the Supreme. It is written in flowing easily understood, sanscrit verse. The style is attractive

and the descriptions picturesque. The metaphors the author employs are not conventional, but modern and novel, often revealing the author' s knowledge of modern science and wide observation and experience of men and things. The central theme of the work is advaitic philosophy, treated in a popular way, with Devi',as the central figure and Siva her supreme Consort, the expounder of the problem of life and means of final beatitude In my view.the author has succeeded in bringing INDIAN PHILOSOPHY from the lofty and sometimes unreachable heights. to within the grasp of the young and the curious. who should find 'Mani dwipa' an entertaing work, teaching the lofty truths of the 'Upanishad' and making them understandable without effort. Sanscrit, though the most appropriate medium for the author's thoughts, is not probably within the grasp of many In a Telugu version "MANIDWIPA" is bound to be a very popular, useful and instructive work.

Vizianagram.
19—6—31

(Sd.) N. Venkataraman, M. A.
Professor of Philosophy.
Maharajah's College,

अनेन कविना विरचितं।

# खेटकदर्शनम्।

खेटकदर्शनं खण्डद्वयात्मकम्। अस्मिन्प्रथमखण्डे मेषादिद्वादशराशीनां त्रिविधविभागः, केन्द्रकोणादि संज्ञानिरूपणं, ग्रहाणां नैसर्गिकतात्कालिकलक्षणं उच्चत्वादिसमस्तविषयादीनि द्वादशभावफलानि चाऽत्र सुस्पष्टं निरूपितानि सन्ति।

पुनरत्र द्वितीय खण्डे मण्डलाध्यक्षाः प्राड्विवाकाः भिषजा सामान्याधिकारिणश्चेत्यादयो जीवाः तासु तासु वृत्तिषु कथं वर्तितुमर्हन्ति तत्तद्वृत्तीनां च कारणानि च प्रस्फुटमुपपादितानि। अतो विद्वांसो ज्योतिश्शास्त्रमपि संस्कृतपाठशालासु छात्रानध्यापयितुं प्रयतन्तामित्यभ्यर्थये।

अविस्तरमसंदिग्धं प्रोक्तं खेटकदर्शनम्।
सूर्यनारायणस्साक्षात्सूर्यनारायणः कविः॥

सू० पुरुषोत्तमशास्त्री।
*P. R. College, Cocanade.*

श्रीखेटकदर्शनाख्योऽयं अपूर्वग्रन्थराजो विद्वद्वतंसानां महान्तमामोदमावहति। यद्यपि बहवो ग्रन्थराजा ज्योतिषविषयाः सार्वजनीनेन अनुभवेन अनुभूयमाना दरीदृश्यन्ते तथापि अनुभवशास्त्रयो-

द्वयोरपि ऐक्यं सम्पाद्य विरचिता ग्रन्था विरलाः । तादृशप्राशस्त्यं इतरप्राचीनज्योतिषग्रन्थानुल्लिखितं बिभ्रदयं ग्रन्थराजः सर्वजन-सम्मोदमापादयन् विजयतेतराम् ।

५-७-३५ ह० गङ्गाधरशास्त्री ।

अवलोक्य च शास्त्राणि जातकानि विशेषतः ।
अनुभूत्या समाख्यातं शास्त्रं खेटकदर्शनम् ॥
नानृतं प्रभवेदस्मिन्निति मे निश्चया मतिः ।
सूर्यनारायणस्साक्षाद्दैवज्ञकुलशेखरः ॥

द० राममूर्तिशास्त्री ।



# श्रीललितोपासना

## यन्त्रस्था

ज्ञानादेव हि कैवल्यं नहि शक्त्युद्भवः क्वचित् ।
शक्तिमिच्छन्नुपासीत निजशक्तिं कुलेश्वरीम् ॥

अस्मिन् ग्रन्थे श्रीललिता परा भट्टारिकाऽम्बाया अवश्यं उपासनीय मिति निरूपितमस्ति । अपि च नवा वर्णार्चना विधिश्च प्रत्येकं प्रदर्शितमस्ति ।

श्रीचक्रलेखनविधानं च समग्रं दर्शितम् आध्यात्मिकसमन्वयश्च ।

मणिद्वीपस्य प्राप्तिस्थानानि—

[ १ ]

**जे० सूर्यनारायणशास्त्री**

D 26 I नारदघाट,

बनारस ।

[ २ ]

**जे० अनन्त ब्रदर्स,**

रामारावुपेट

काकिनाडा

गोदावरी जिला

[ ३ ]

**मास्टर खेलाड़ीलाल एण्ड सन्स,**

संस्कृत बुकडिपो,

कचौड़ीगली, बनारस सिटी ।

